# रवीन्द्र रूपकाणि




रवीन्द्रनाथ ठाकुर विरचित रूपक चतुष्टयस्य संस्कृतानुवादः

—प्रो० के. टि. पाण्डुरङ्गि

# रवीन्द्र रूपकाणि

रवीन्द्रनाथ ठाकुर विरचितस्य

सन्यासी

मालिनी

नृपः महिषी च

कर्णः कुन्ती च

इति रूपकचतुष्टयस्य

संस्कृतानुवादः

अनुवादकः

प्रो० कृ. त. पांडुरंगि

बेंगळूरु विश्वविद्यानिलयस्य निवृत्त संस्कृतप्राध्यापकः

पूर्णप्रज्ञ विद्यापीठस्य उपकुलपतिः

मिथिक् सोसाइटी संस्थाया अध्यक्षः

RAVINDRA RUPAKANI

A Collection of four plays of Ravindranath Tagore translated into Sanskrit by Prof. K. T. Pandurangi

Published by Mrs. Susheela K. Pandurangi, 132/4, 2nd Cross, III Block, Jayanagar, Bangalore-560 011

Pages : vi+98



1990

Price: Rs. 60.

COPIES CAN BE HAD FROM

1. Vedanta Book House
VI Main, Chamarajpet
Bangalore-560 018

2. Geetha Book House
New Statue Circle
Mysore-570 001



Printed at PRABHA PRINTING HOUSE
Dr. D.V. Gundappa Road, Basavanagudi, Bangalore-560 004

# प्रस्तावना

विंशतिशतकीयविश्वविख्यातकविषु रवीन्द्रनाथ ठाकुरः उन्नतं स्थानं अर्हति इति सुविदितमेव। नोबेल् पारितोषकेन बहुमानितः एषः विश्व-साहित्ये भारतीयसाहित्यस्य सुभद्रं स्थानं कल्पयामास।

व्यास वाल्मीकि कालिदास भास प्रभृतिभिः संस्कृतकविभिः सातवाह-नादिभिः प्राकृतकविभिः कम्ब पम्प नन्नय प्रभृतिद्राविडभाषाकविभिः तुलसीदास ज्ञानदेवादिभिः उत्तरमध्यभारतीयभाषाकविभिः यद्यपि भारतीय-साहित्यसम्पत् बहुमुखतया अभिवर्धिता तथापि विंशतितमे शतके आंग्ल-साहित्यसंस्कृतिसंपर्केण नूतना साहित्यसरणिः आविर्भूता। रसप्रधान-साहित्यं वर्णनाप्रधानसाहित्यं च पृष्ठतः कृत्वा विचारप्रधानसाहित्यस्य मानवताभावाविष्करणसाहित्यस्य राष्ट्रनिष्ठाप्रेरक साहित्यस्य च आविष्कारः समजनि।

विचारसाहित्ये परम्पराश्रद्धायाः नूतनविचारप्रवाहस्य च संघर्षः उट्टंकितः। मानवस्वभावाविष्करणसाहित्ये मानवीयमौल्यस्य मानवीय दौर्बल्यस्य च संघर्षः चित्रितः।

राष्ट्रनिष्ठा, पूर्वपश्चिमसंस्कृतिसंघर्षः, भारतीयसंस्कृतौ ग्राह्य-त्याज्य विवेकः इत्यादयोपि साहित्यविषयतामापुः।

रवीन्द्रनाथठाकुरस्य साहित्यकृतिषु एते सर्वे अंशाः दृष्टिगोचराः भवन्ति।

सन्ति रवीन्द्रनाथठाकुरस्यैव कतिचन वैशिष्ट्यानि।

कविः अयं सहृदयः रसदृष्टिः गम्भीरवाक् विचारशीलश्च। मानवीयमौल्यानां पुरस्कर्ता मानवदौर्बल्याय अनुकम्पावांश्च।

अस्य शैली क्वचित् परुषा क्वचित् कोमला। क्वचित् आदर्शशिखरारूढा क्वचित् विनोदविलसिता। पदानि पदपुंजानि च समुचितानि सत्त्वपूर्णानि च। न किंचित् निरर्थकम्। न किंचित् अतिशयार्थकम्। व्यंग्योक्तयः वक्रोक्तयश्च तत्र तत्र दृश्यन्ते। अस्य कवेः साहित्यकृतिषु सहृदयता मानवीयता विचारशीलतानां सङ्गमं अनुभवामः।

'रवीन्द्र रूपकाणि' इति प्रकृते ग्रन्थे रवीन्द्रस्य रूपकचतुष्टयं संस्कृतभाषायां अनूदितम्। स्वयं परिपुष्टापि संस्कृतभाषा भाषान्तरेभ्यः श्रेष्ठसाहित्यस्य अनुवादमपि स्वागतयति। पैशाचीभाषायां विरचितस्य कथासरित्सागरस्य संस्कृते अनुवादः एव अत्र निदर्शनम्। संस्कृतस्य उभयभाषाप्रियतापि संस्कृतनाटकेषु दृष्टा। विंशतिशताब्दीये अस्मिन् शतके आधुनिकविषयाणां शैल्याश्च आयोजनं संस्कृते न तावत् कृतं यावत् इतरभारतीयभाषासु। अतः इतरभाषाभ्यः अनुवादेन नूतनविषयाणां शैल्याश्च उपक्षेपे कृते समकालीनसंस्कृतसाहित्यरचना सुगमा स्यात्। तदेतन्मनसि कृत्वा रवीन्द्ररूपकाणि संस्कृते अनूदितानि।

अत्र सम्पुटे संकलितरूपकचतुष्टये प्रथमे संन्यासी नामरूपके प्रपञ्चत्यागेन न मनसः शांतिः लभ्यते। प्रपञ्चत्यागः पलायनवादः। अतः प्रपंचे स्थित्वैव मानवीयहृदयसंपत्संपादनं युक्तं इति प्रतिपादितम्। भारतीयसमाजे अस्पृश्यताकलंकस्य दुष्परिणामं प्रदर्श्य तत्परित्यागः सूचितः। कृत्रिमवैराग्यापेक्षया सहजप्रेमभावः मानवजीवनं सार्थकयतीति निरूपितम्।

द्वितीये मालिनी नामरूपके परम्पराश्रद्धायाः नूतनविचारस्य च संघर्षः प्रदर्शितः। एतादृशसंघर्षः न कोपेन नापि जुगुप्सया न चापि

प्रतिरोधेन परिहरणीयः किंतु उदात्तभावेन साक्षात् संपर्केण च परिहरणीयः इति सुष्ठु प्रतिपादितम् ।

तृतीये 'नृपः महिषी च' इति रूपके प्रेमपाशनिगडितस्य कर्तव्य-विमुखता तस्य दुष्परिणामाश्च प्रदर्शिताः ।

चतुर्थस्य 'कर्णः कुन्ती च' इति रूपकस्य प्रतिपाद्यं वस्तु सर्वविदितमेव । कर्णस्य स्वाभिमानं स्वामिनिष्ठा मातृप्रेम च अत्र प्रदर्शितानि । कर्णः मातरं न जुगुप्सते किंतु संनिवेशवशतां अवगच्छति इति प्रतिपादितम् ।

एषां रूपकाणां अनुवादकाले आंग्लभाषायाः समृद्धिः मया अनुभूता । कवेः उचितपदवाक्ययोजना अनुभूता । प्रतिपदं प्रतिवाक्यं च कवेः विचारगाम्भीर्यं सहृदयता क्वचित् विनोदप्रियता च अनुभूतानि । शब्दानां कोमलसंस्पर्शः अनुभूतः । क्षुरिकातीक्ष्णता च अनुभूता ।

अनेनैव प्रकारेण संस्कृतभाषासमृद्धिश्च अनुभूता । आंग्ल-संस्कृतभाषा महानद्योः मधुरगम्भीरप्रवाहयोः अवगाहनसुखं अनुभूतम् । अनेन अनुवादकार्येण किं मया भाषाप्राविण्यं अधिगतं उत विचारवैशाल्यं प्राप्तं इति न अहं निश्चेतुं प्रभवामि । अवियोगिनोः एतयोः पृथक्कृत्य प्रयोजनान्वेषणमेव बालिशयत्नः इति मन्ये ।

ग्रन्थस्य चित्ताकर्षकता मुद्रणस्य चित्ताकर्षकतां अवलम्बते । सन्ति चित्ताकर्षकाः मुद्रकाः प्रभामुद्रणालयधिकारिणः श्री डि. एस्. कृष्णाचार्याः वासुदेवश्च चित्ताकर्षकतया रूपकाणि एतानि मुद्रणे रूपितवन्तः । तयोः कृतज्ञतां निरूपयामि ।

बेंगळूरु
1990

पाण्डुरङ्गि कृष्णाचार्यः
बेंगळूरु विश्वविद्यानिलयस्य निवृत्तसंस्कृतप्राध्यापकः

श्री रवीन्द्रनाथठाकुरविरचितम्

# सन्यासी

नाम रूपकम्

## सन्यासी रूपके पात्राणि

सन्यासी

वासंती

ग्रामवृद्धः

ग्रामीणाः

विद्यार्थिनौ

पुष्प बालिका

बिन्दुः

तिस्रः महिलाः

सैनिकः

पथिकः

बाला

माता

# संन्यासी

## प्रथमं दृश्यम्

(गुहायाः द्वारे संन्यासी तिष्ठति)

संन्यासी— न मे संवत्सरमासदिनहोराक्षणविभागो नाम अस्ति। प्रशान्तो मे कालप्रवाहः। यस्य कालप्रवाहस्य तंरगेषु शाखासु पत्राणीव जगत् नृत्यति न सः मां बद्धुं प्रभवति।

अन्धकारपूर्णायामस्यां गुहायां अहं एकाकी। आत्मरतः आत्मतृप्तश्च। अरण्यस्य सर इव कालरात्रिः प्रशान्ता स्वगाम्भीर्यभीता च। सन्धिच्छिद्रेभ्यः जलमुत्प्लवते। जलधारासु मण्डूकाः तरन्ति। अहं च शून्यमन्त्रान् जपन् उपविष्टोऽस्मि। जगतः परिधिः क्रमेण विगलितो भवति। अनादितः दृश्यमानानि नक्षत्राणि अग्निविस्फुलिंगा इव अदृश्यानि भवन्ति। इदानीं मम आनन्दः प्रलयकाले योगनिद्रानन्तरमेकाकिना शिवेन अनुभूयमानानन्दसदृशः। मुक्तोऽहम्। अद्वितीयोऽहम्।

अयि प्रकृते! यदा अहं तव दासः आसम् तदा मम हृदये त्वया द्वन्द्वमुत्पादितम्। आत्मघातुकं अन्तर्युद्धं संक्षोभितम्। तृष्णाः प्रज्वलिताः। ममैव छायां वशीकर्तुं उन्मत्त इव अधावम्। तव क्षुद्रतृप्तिसाधनैः महतीमतृप्तिमेव अजनयः। तव संमोहनास्त्रभूतायाः क्षुधायाः शान्तिमन्विष्यन् निरन्तरदुर्भिक्षमेवान्वभवम्।

निरन्तरमायास्वरूपे अनन्तछद्मवेषधारिणि प्रकृते! त्वां धिक्कर्तुं

शपथो मया कृतः। तव संमोहनविद्युच्छटा तिरस्कृता। सा एषा संमोहनच्छटा इदानीं शक्तिहीना मे पादतले तिष्ठति।

इदानीं अभयं प्राप्तोऽस्मि। जिततृष्णोऽस्मि। अज्ञानावरणं विगलितम्। ज्ञानदृष्टिः विस्फुटं विराजते। मिथ्याप्रपंचं प्रविश्य असंमोहितः। अविचलितः तन्मध्य एव स्थिरं तिष्ठामि।

## द्वितीयं दृश्यम्

(ततः प्रविशति ग्राममार्गे संन्यासी)

**संन्यासी—** अतिसंकुचिता निगडिता खलु इयं पृथिवी। अनवरतं क्षितिजरेखया अनुसृता बन्दीकृतेव। अरक्षिता च। इमे वृक्षाः, गृहाणि, नानावस्तूनि च मे नेत्रे आकुलयन्ति। विस्तीर्णं अन्धंतमः आलोकेन निष्कासितं पंजरे बन्दीकृतमिव शृंखलाबद्धः शकुनिरिव कुण्ठितगतिः कालः होरानिर्बन्धेषु क्रोशन् परिभ्रमति। (विलोक्य) किन्तु खलु एते जनाः इतस्ततः धावन्ति? नित्यं कस्यचिद् वस्तुनः वियोगभयेन उद्विग्ना इव दृश्यन्ते। हन्त न तद् वस्तु कदाचिदपि लभन्ते।

(नेपथ्ये जनसंकुलसंचारध्वनिः)

(ततः प्रविशति युवतिद्वयं ग्रामवृद्धश्च)

**प्रथमा युवतिः—** मा मां हासय, मा मां हासय।

**द्वितीया युवतिः—** (ग्रामवृद्धमुद्दिश्य) त्वं वृद्धः इति को वा वक्तुं प्रभवति?

ग्रामवृद्धः— मूर्खाः केवलं आकारेण जनं परीक्षन्ते।

प्रथमा— धिक् तान्। बाल्यादारभ्य तव आकारं पश्यावः यथा जातोऽसि।

ग्रामवृद्धः— प्रभातसूर्य इव अपरिणतोऽस्मि।

प्रथमा— नूनं खल्वाटकान्तः किरणवानिव।

ग्रामवृद्धः— अये तीक्ष्णतरा खलु भवत्योः सौन्दर्यदृष्टिः। गौणेषु एव अंशेषु भवत्योः कटाक्षः।

द्वितीया— अलं प्रलापेन। अनंग! त्वरितं गृहं गन्तव्यम्। अन्यथा भर्ता मे कुप्यति।

प्रथमा— आर्य! आमन्त्रयावहे। भवानपि आकारेणैव आवां परीक्षितुमर्हति।

ग्रामवृद्धः— नहि आकारादन्यत् भवत्योः परीक्षार्हं किंचिदस्ति।

(निष्क्रान्ताः)

(ततः प्रविशन्ति त्रयो ग्रामीणाः)

प्रथमः— दुर्विनीतः ग्रामवृद्धः मामपि अवमानयति। दुर्नयस्यास्य प्रायश्चित्तमनुभवेदेव।

द्वितीयः— नूनं सः दण्डयितव्यः।

प्रथमः— यथा खलु मृत्युशय्यायामपि स्मरति।

तृतीयः— दृढचित्तैरत्र भाव्यम्। न तस्य अवसरो देयः।

द्वितीयः— महान्तमिव आत्मानं मन्यते।

प्रथमः— तथा महान् यथा स्फुटितुं सन्नद्धः।

तृतीयः— पक्षे प्रसृते पिपीलिका अपि विनश्यन्तीति दृष्टमेव ननु।

तृतीयः— अपि उपायः कश्चित् चिन्तितः ?

प्रथमः— न एकः उपायः। किन्तु उपायानां शतं चिन्तितम्। तस्य गृहं हलमुखेन कर्षामि। कृष्णवर्णांकितकपोलं तं गर्दभमारोप्य राजपथे संचारयामि। इह लोके तस्य प्राणधारणमेव अशक्यं करोमि। किंच

(निष्क्रान्ताः)

(विद्यार्थिनौ प्रविशतः)

प्रथमः— प्राध्यापको माधवः चर्चास्पर्धायां विजयी इति मे मतिः।

द्वितीयः— न। प्राध्यापको जनार्दनः विजयी।

प्रथमः— माधवेन स्थूलात् सूक्ष्मं समुद्भूतमिति साधितं खलु।

द्वितीयः— किन्तु जनार्दनेन सूक्ष्ममेव स्थूलस्य कारणमिति सुष्ठु प्रतिष्ठापितम्।

प्रथमः— अशक्यमिदम्।

द्वितीयः— सूर्यप्रकाश इव स्पष्टमिदम्।

प्रथमः— स्थूलात् वृक्षात् सूक्ष्माणि बीजानि प्रादुर्भवन्ति ननु!

द्वितीयः— वृक्षस्तु बीजात् निष्पन्नः।

प्रथमः— भो संन्यासिन्। किमत्र तत्वम्?
किं तावत् मूलम्? सूक्ष्मं स्थूलं वा?

संन्यासी— न अन्यतरदपि।

द्वितीयः— न अन्यतरदपि। हन्त! एतदेव सुष्ठु प्रतिभाति।

संन्यासी— उत्पत्तिमूला हि संहृतिः संहृतिमूला च उत्पत्तिः। सोऽयं संसारः। स्थूलसूक्ष्मयोः भेददर्शनं अज्ञानविजृम्भितम्।

प्रथमः— सुलभमिदं तत्वम्। मन्ये इदमेव प्रतिपादितमासीत् मम प्राध्यापकेन माधवेन।

द्वितीयः— एष तावत् मम प्राध्यापकस्य जनार्दनस्य आशयः इति मे मतिः।

(निष्क्रान्तौ)

(ततः प्रविशतः पुष्पावचयनासक्ते बालिके)

(गीतम्)

क्लान्त्या नीतः कालः, कुसुमानि च मलिनतां यान्ति।
दयितो मे नायातः नाहं रचयामि सुममालाम्।

पथिकः— न एषा चिन्ता युज्यते। रचिते पुष्पहारे धारणार्थं वक्षः उपतिष्ठत्येव।

प्रथमा— न कोऽपि प्रतिबध्नाति च।

द्वितीया— धृष्टः खलु असि। किमर्थं अन्तिके चरसि।

पथिकः— कलहप्रिया दृश्यसे। दूरे खलु तिष्ठामि। आवयोः अन्तरा ऐरावतः संचरितुं शक्नोति।

द्वितीया— नूनं मत्तः भीतोऽसि अन्तिकमागच्छसि चेत् किं भक्षयामि?

(हसन्तो निष्क्रान्ताः)

(ततः प्रविशति वृद्धः याचकः)

याचकः— आर्यमिश्राः। अनुकम्पनीयोऽस्मि। भवतां समृद्धौ मुष्टिमात्रं दीयताम्। भगवान् भवतां समृद्धिं इतोपि वर्धयति।

सैनिकः— (प्रविश्य) अपसर अपसर। किं न पश्यसि अमात्यपुत्रः आगच्छतीति?

(उभौ निष्क्रामतः)

संन्यासी— मध्याह्नसमयोऽयम्। प्रचण्डः सूर्यः। आकाशः परिवर्तितप्रतप्तताम्रभण्ड इव प्रज्वलति। पृथिवी उष्णमुच्छ्वसिति। धूसरवाताः नृत्यन्ति। दृष्टो मया क्षुद्रोऽयम् जीवलोकव्यापारः। कथं वा क्षुद्रलोकमिमं प्रवेष्टुमिच्छेयम्। मुक्तोऽहम्। न अनेन संसारेण पुनः निगडितो भवामि। असंगः तिष्ठामि असंगः तिष्ठामि।

(ततः प्रविशति वासन्ती काचित् महिला च)

महिला— वत्से! त्वं रघोः सुता खलु। न अत्र पथि संचर। एष देवतायतनमार्गः।

वासन्ती— दूरे खलु संचरामि।

महिला— वस्त्रांचलं मे त्वां स्पृशतीव। देवतायै नीयमानमिदमर्घ्यं अशुचि भवेत्।

वासन्ती— आर्ये! सत्यमेव वदामि। भवत्याः वस्त्रांचलं न मामस्पृशत्।

(महिला निष्क्रान्ता)

वासन्ती— (संन्यासिनं दृष्ट्वा)
तात! अहं रघोः सुता वासन्ती। अपि भवतः समीपमागन्तुं प्रभवामि।

संन्यासी— वत्से बाढमागन्तुमर्हसि।

वासन्ती— तात। अहं अस्पृश्या इति सर्वे वदन्ति।

संन्यासी— ते सर्वे अस्पृश्याः। संसारधूलौ लुठन्ति किल। संसारान्निवृत्तः एव शुचिः। किं त्वया अपराद्धम्। किमर्थं त्वां अस्पृश्यां मन्यन्ते?

वासन्ती— दिवंगतेन मे पित्रा एतेषां अभिप्रेतो धर्मः नैव अनुष्ठितः। देवतापूजा न कृता कर्माणि नैव कृतानि।

संन्यासी— वत्से। किं दूरे तिष्ठसि?

वासन्ती— अपि मां स्पृशति भवान्?

संन्यासी— नूनं स्पृशामि। यतः स्पृष्टेऽपि न किमपि मां स्पृशति। अनन्तदर्शी अहं सर्वतोपि दूरः। मम समीपे उपविश।

वासन्ती— (सबाष्पम्) समीपमुपगतायां मयि 'दूरं अपसर' इति न कदापि निराकर्तव्या।

संन्यासी— समाश्वसिहि वत्से समाश्वसिहि। विरक्तः खलु अहम्। न कोऽपि मम प्रियः नापि द्वेष्यः। न कदापि त्वयि मे ममत्वाभिमानः। अतः न परित्यागस्य अवसरः। यथा अनेन नीलेन गगनेन न मे संगः तथा त्वयापि न संगः। त्वं न मदीया नापि अन्या।

वासन्ती— तात! अहं देवैः मनुष्यैश्च सममेव परित्यक्ता।

संन्यासी— अहमपि तथैव। देवाः मनुष्याश्च मया सममेव परित्यक्ताः।

**वासन्ती—** अपि ते माता नास्ति?

**संन्यासी—** नास्ति।

**वासन्ती—** पिता नास्ति?

**संन्यासी—** पितापि नास्ति।

**वासन्ती—** मित्राणि?

**संन्यासी—** न मित्राणि नापि बान्धवाः।

**वासन्ती—** तर्हि त्वया सह अहं निवसामि। मां न परित्यजसि खलु?

**संन्यासी—** परित्यक्तव्यं परित्यक्तम्। मम समीपे निवसन्ती अपि न समीपमुपयासि।

**वासन्ती—** तात! न ते वचनानि अवगच्छामि, कथय। इह जगति मम शरणं कशिचदस्ति न वा?

**संन्यासी—** मरणमन्विष्यसि। किं न जानासि जगदिदं तलरहितं पात्रमिति? जीवराशिरयं शून्यादाविर्भूय शरणमन्विष्यन् शून्यमेव प्रविशति तिरोभवति च। परितस्ते मिथ्यापिशाचा मायाजालं प्रसरन्ति। तैः दत्तं भोग्यं छायामात्रम्। ते वासनां प्रक्षोभयन्ति। न सन्तर्पयन्ति। वत्से! एहि दूरं दूरं व्रजावः।

वासन्ती— तात। एते जनाः सुखिन इव दृश्यन्ते। दूरत एव पश्यामः।

संन्यासी— हन्त। अज्ञाननिमग्नाः एते। संसारोऽयं निरन्तरः विनाशप्रवाहः इति न एते जानन्ति। प्रतिक्षणं विनश्यति, किन्तु न विरमति। जीवराशिरयं मरणमेव शरणं याति।

वासन्ती— तात। भीषयसि माम्।

(ततः प्रविशति पथिकः)

पथिकः— अपि किंचिदाश्रयस्थानमत्र सविधे स्यात्?

संन्यासी— वत्स! आत्मानं विना न किंचिदन्यदाश्रयस्थानम्। आत्मा अन्विष्यताम्। दृढमत्र विश्वसिहि यदि आत्मनः रक्षणमिच्छसि।

पथिकः— श्रान्तोऽहं विश्रमस्थानमन्विष्ये।

वासन्ती— मम कुटीरं समीपे तिष्ठति। अपि आगन्तुमिच्छसि?

पथिकः— का त्वम्?

वासन्ती— किं ज्ञातव्यमेव का अहमिति? अहं रघोः सुता।

पथिकः— वत्से! नाहं त्वया सह निवसितुमर्हामि। भगवान् रक्षतु त्वाम्।

(शय्यागतं कंचन वहन्तः पुरुषाः प्रविशन्ति)

पथिकः— दृढं सुप्तः।

द्वितीयः— अतिभारवान् दुर्विनीतोऽयम्।

पथिकः— (प्रविश्य) कोऽयं नीयते?

तृतीयः— अयं तन्तुवायः बिन्दुः। मृत इव स्वपिति सोऽयं बहिरानीतः।

द्वितीयः— भ्रातः! अतीवश्रान्तोऽयम्। अतः प्रकम्प्य एनं बिन्दुं जागरयावः।

बिन्दुः— (प्रकम्पितः) ए....आ....ऊ

तृतीयः— किमर्थमाक्रोशसि?

बिन्दुः— पृच्छामि के यूयम्। कुत्र मां नयथ?

(शय्यागतं तं भूमौ स्थापयन्ति)

तृतीयः— किं तूष्णीं स्थातुं न प्रभवसि? यथा मृताः तिष्ठन्ति।

द्वितीयः— धृष्टः खलु मृतोऽपि भाषते।

तृतीयः— अकम्पयन् तिष्ठ। मृतोऽसि ननु?

बिन्दुः— भ्रातः। नाहं मृतः दृढं सुप्तः आसम्। न मां मृतं मन्यध्वम्।

द्वितीयः— पश्यत अस्य धाष्ट्र्यम्। मृतोऽपि न मृत इति वितण्डां करोति।

तृतीयः— न एषः सत्यमंगीकुर्यात्। अलमनेन सह विवादेन। अस्य अन्त्यंस्काराय सन्नद्धा भवामः।

बिन्दुः— भवतां कूर्चैः शपथं करोमि। नाहं मृतः नाहं मृतः।

(हसन्तः निष्क्रामन्ति)

संन्यासी— (सुप्तां वासन्तीमवलोक्य) बाला इयं बाहुलतामुपधानीकृत्य दृढं सुप्ता। एष एव अवसरः इमां परित्यज्य गन्तुम्।

(विचिन्त्य - स्वगतम्)

भीरो! किमेतादृशक्षुद्रवस्तुनः भीत्वा पलायनं युक्तम्? एतादृशवस्तुसंगः अविरक्तानामेव ऊर्णनाभिजालं मक्षिकाणामिव बन्धकः स्यात् न तु मादृशानां विरक्तानाम्।

वासन्ती— (जागृता, चकितम्) तात! अपि मां त्यक्त्वा गतोऽसि?

संन्यासी— कुतो वा त्वां त्यक्त्वा दूरं गच्छामि। कुतो मे भयम्। किमहं छायासदृशवस्तुनो बिभेमि?

वासन्ती— पथि कोलाहलः श्रूयते।

संन्यासी— मम हृदये निष्कम्पता वर्तते।

(पुरुषैः अनुसृता तरुणी प्रविशति)

तरुणी— अपसरत अपसरत। मा प्रेमकथां कुरुत।

प्रथमः— किं वा प्रेमकथां न करोमि? को वा मे अपराधः?

तरुणी— पुरुषहृदयं पाषाणनिर्मितम्।

प्रथमः— अनृतमेतत्। पाषाणनिर्मिते हृदये कथं वा पंचबाणः छिद्रं कल्पयति व्यथयति च?

अन्ये सर्वे— (हसन्ति) सुष्ठु प्रत्युत्तरितम्। सुष्ठु प्रत्युत्तरितम्।

द्वितीयः— प्रिये। इदानीं किं वा भवति भणति?

तरुणी— उत्तरमपेक्षसे त्वम्। चाटुतरमुक्तमिति ते मतिः। अतिनीरसमुक्तं त्वया।

प्रथमः— सुहृदः भवन्त एव निर्णयन्तु मया उक्तं सरसं नीरसं वा इति। यदि अस्माकं हृदयानि पाषाणनिर्मितानि तर्हि .....

तृतीयः— नूनं न प्रतिवचनमत्र शक्यते।

प्रथमः— सुहृदः! पुनरपि मम वचनं विवृणोमि। 'पुरुषहृदयानि पाषाणनिर्मितानि' इति तया उक्तम्। 'यदि अस्माकं हृदयानि पाषाणनिर्मितानि तर्हि कथं पंचबाणः छिद्रं कुर्यात्' इति मया पृष्टम्। अपि इदानीं स्पष्टः आशयः।

द्वितीयः— चतुर्विंशतिवत्सरा यावत् अस्मिन् नगरे क्रयविक्रयव्यवहारे

निरतः। किमेतावन्मात्रमवगन्तुं न प्रभवामि।

(सर्वे निष्क्रान्ताः)

संन्यासी— वत्से। किमेतत् पश्यसि।

वासन्ती— तात! विशालं तव हस्तं पश्यामि। पक्षिशावक इव लघुः मे हस्तः नीडमत्र आरचयितुमभिलषति। विशालायां पृथिव्यामिव विशाले तव हस्ते सर्वस्याप्यवकाशः। रेखाः एताः नद्यः इव। उन्नतांगुष्ठमूलाश्च गिरय इव।

संन्यासी— वत्से! तव स्पर्शः निद्रास्पर्श इव कोमलः। मन्ये आत्मानमेव आवृण्वतः अनादिमायास्पर्शस्य एकदेश एव तव स्पर्श इति। किन्तु वत्से! त्वं दिवापतंगः। सन्ति तावत् सस्यदेशाः पुष्पाणि सुहृत्पतंगाश्च तव संचारसुहृदः। मम किं प्रयोजनं ते। मम केन्द्रबिन्दुरेकत्र, परिधिस्तु न कुत्रापि।

वासन्ती— तात! भवतः वात्सल्यं विना नान्यदभिलषामि।

संन्यासी— एतस्यामहं स्निह्यामि इति एषा मुग्धा मनुते। यदि एवं विचिन्त्य एषा सुखिनी भवति चिन्तयतु नाम। एतादृशस्नेहमाययैव एताः संवर्धिताः। स्नेहमाययैव परितुष्यन्ति।

वासन्ती— तात। बालतृणमूर्धनि प्रसृता आश्रयाय तरुमन्विष्यन्ती एषा लता मदीया। अंकुरदर्शनादारभ्य मयैव एषा सलिल-सेचनेन संवर्धिता। अहमिव एषापि रथ्यायां संवर्धिता रथ्यायामेव पादघातेन

विनाशयितुं शक्या च। पश्य सितच्छायामध्यानि अस्याः लतायाः नीलकुसुमानि। एताः सितच्छायाः अस्याः स्वप्नकल्पाः। एतैः कुसुमैः ते मूर्धानं स्पृशामि। सुन्दरवस्तून्येव विश्वरहस्यविज्ञान-साधनानीति मे मतिः।

संन्यासी— नहि नहि सौन्दर्यं केवलं मिथ्या। समलोष्टकुसुम एव ज्ञानी।

(स्वगतम्) अये किमिदं सम्मोहनं मम अंगानि आवृणोति इन्द्रचापसदृशी मायाजवनिका नेत्रे मे निमीलयति। किं प्रकृतिरेव मे परितः स्वप्नराज्यं सृजति। इन्द्रियाणि च संमोहयति। (सहसा लतामुत्पाट्य उत्थाय) अलमलमेतेन। विनाशमार्गः एषः। बाले। कीदृशी एषा ते माया?

अहं संन्यासी। मया सर्वं परित्यक्तम्। मुक्तोऽहम्। नहि नहि! न तावत् बाष्पाणि मुंच। नाहं ते बाष्पमोचनं सोढुं शक्नोमि। हन्त! कुत्र मे हृदयकूपे एषः सर्पः संवृत आसीत्। कथं वा अस्य फूत्कारो वा दंष्ट्रा वा मया न लक्षिताः। अथ एते न कदापि विनष्टाः निरन्तरविषयवैराग्येऽपि कथंचिदनुवर्तन्ते। एते पिशाचाः मे हृदये अस्थिपंजरेण नृत्यन्ति। महामायायाः मायावेणुनिनादमनुसृत्य ताण्डवं कुर्वन्ति। वत्से! मा रुदिहि। समीपमागच्छ मे। त्वं मे संचरत्तारासंगीतमिव। अतीतजगतः अनुरणनमिव त्वं मे प्रकृतेरपि गरीयसी सूर्यमण्डलादपि गरीयसी नक्षत्रलोकतोऽपि गरीयसी। सोऽयमनुभवः अन्धकारसदृशः। नाहमेतस्य स्वरूपं जानामि। न एतादृशः अनुभवः कदापि भूतपूर्वः। अस्मात् अनुभवात् बिभेमि।

वत्से! परित्यजामि त्वाम्। यतः त्वं आगता तत्रैव त्वं गच्छ। अज्ञातसंदेशवाहिनी तत्रैव गच्छ।

वासन्ती— तात! मा मां परित्यज। भवन्तं विना न कोऽपि मे अन्यः आश्रयः!

संन्यासी— त्वां परित्यज्य मया गन्तव्यम्। 'अहं ज्ञानी अभवम्' इति मया चिन्तितमासीत्। न अहं ज्ञानी। ज्ञानं मया सम्पादनीयम्। त्वां परित्यजामि। त्वया बन्धनस्य मूलमन्विष्यामि। तव स्वरूपमन्विष्यामि।

वासन्ती— तात! यदि मां परित्यजसि मरणमेव मे शरणम्।

संन्यासी— मम हस्तं मुंच। मां मा स्पृश। मुक्तो भवितुमिच्छामि।

## तृतीयं दृश्यम्

(गिरिमार्गे शिलोच्चये संन्यासी उपविष्टः।
मेषपालबालकः गायन् संचरति)

(गीतम्)

कुसुमसमय एष वर्धते सर्वदिक्षु
रहसि हृदयजापं पुष्पकन्या करोति।
मृदुमधुरविरावैः पल्लवाः संगिरन्ति
जहि मम हृदयेशे मानमेतं कठोरम्।

संन्यासी— सन्ध्याकालस्य सुवर्णारुणवर्णः सागरस्य नीलवर्णे निमज्जति। पर्वतपर्यन्तवर्तिनिबिडारण्येन दिनान्तप्रकाशः निपीयते।

दक्षिणदिग्भागे ग्रामनिवेशनानि वृक्षान्तरदृश्यमानदीपशिखाद्वारा दृश्यन्ते। प्रकृते! इदानीं मदधीना असि। अस्मिन् विशालांगणे यत्र अहं राजा इव उपविष्टः। वर्णरंजितानि आस्तरणानि त्वया प्रसारितानि। कण्ठे नक्षत्रमालां धृत्वा नृत्यन्तीं त्वां पश्यामि।

(मेषपालबालिकाः गायन्ति)

(गीतम्)

तटिनीतीरे नादः धैर्यं मे हरति तव वेणोः
पंचायुधस्य बाणो वक्षसि मे दूरमनुयातः
आदेशय मार्गं मे यत्रासौ हृदयवल्लभश्छन्नः
सम्मिलतु हृदयनादो वेणोनदिन दयितस्य।

संन्यासी— एतादृशी रमणीयतमा सन्ध्या जन्मजन्मान्तरेषु मया पूर्वं एकदैव अनुभूता। स समयः गीतमाधुर्येण प्रेममाधुर्येण च परिप्लुतः आसीत्। सन्ध्यातारां स्मारयन्त्या तया सह अहं समुपाविशम्। कुत्र सा बाला? किम् सा स्वकुटीरस्य द्वारि तामेव सन्ध्यातारां पश्यन्ती बाष्पपूरितनयना एकाकिनी उपविशति? सन्ध्या विरमति। ताराः विलुम्पन्ति। निद्रा प्रसरति। बाष्पाणि गद्गदाश्च शाम्यन्ति। दृढं स्वपिति सा बाला। नहि नहि नाहं पुनः तां गच्छामि। संसारिणां स्वप्नाः यथेच्छं प्रसरन्तु। नाहं तत्र निमज्जितुमिच्छामि। न वा नूतनान् स्वप्नान् स्रष्टुमिच्छामि।

(ततः प्रविशति जर्जरिता जीर्णवस्त्रधारिणी बाला)

बाला— तात! कुत्र तिष्ठसि?

संन्यासी— वत्से एहि मम अन्तिकमुपविश।

तात इति सम्बोधनं मामेव अधिकृत्य इत्यवगच्छामि। अन्या च बाला काचित् तात इति मां सम्बोधयति स्म। तस्याः स्वरः तव स्वरसदृशः एवासीत्। तातः इदानीं प्रत्युत्तरयति। किं तु स स्वरः नास्ति।

बाला— भवान् कः?

संन्यासी— संन्यासी खलु अहम्। वत्से। कस्ते पिता?

बाला— सः अरण्यात् काष्ठानि संचित्य जीवनयात्रां निर्वहति।

संन्यासी— अपि ते माता अस्ति?

बाला— मम बाल्ये वयसि एव सा मृता।

संन्यासी— अपि ते पितरि स्निह्यसि?

बाला— तस्मिन् अनन्या मे प्रतिः। तं विना न कोऽपि मे आश्रयः अस्ति।

संन्यासी- जानामि वत्से जानामि। कोमलं ते हस्तं देहि। विशाले मे हस्ते धारयामि।

बाला— सन्यासिन्! किं हस्तसामुद्रिकां जानासि? किं मम हस्तौ दृष्ट्वा मम भवितव्यं वक्तुं प्रभवसि?

संन्यासी— ईषदिव जानामि। कालेन सर्वमवगच्छामीति मे मतिः।

बाला— पितरं प्रति गन्तव्यमिदानीम्।

संन्यासी— कुत्र सः स्थितः ?

बाला— यत्र खलु पन्था काननं प्रविशति। यदि अहं तत्र न तिष्ठामि तर्हि तेन प्रच्युता भवामि।

संन्यासी— वत्से! मूर्धानं समीपमानय। आशीर्वादपूर्वकं ते मूर्धानं चुम्बामि।

(ततः प्रविशति काचिन्माता पुत्रीभ्यां सह)

माता— (पुत्र्यौ उद्दिश्य) मिश्रायाः पुत्राः सुदृढाः सुन्दराः वर्तन्ते। युवां तु यावद् भोजयामि तावत् तावत् कृशे भवथः।

प्रथमा पुत्री— मातः नायं आवयोः दोषः। किमावां भर्त्सयसि।

माता— न श्रमः कर्तव्यः न श्रमः कर्तव्यः इति असकृत् ब्रवीमि। तथापि इतस्ततः धावथः।

द्वितीया— मातः! तवैव आदेशात् इतस्ततः धावावः।

माता— किं ते धार्ष्ट्यम्। मय्येव दोषमापादयसि।

संन्यासी— (मातरमुद्दिश्य) पुत्रि कुत्र प्रस्थितासि ?

माता— तात प्रणमामि। वयं गृहं प्रस्थिताः।

संन्यासी— गृहे कति यूयम्?

माता— मम श्वश्रूः भर्ता, एते पुत्र्यौ, पुत्रद्वयं च।

संन्यासी— कथं वा दिवसान् यापयसि?

माता— भर्ता मे क्षेत्रं गच्छति। अहं गृहकर्माणि निर्वहामि। अपराण्हे सुताभ्यां सह कार्पासतन्तून् रचयामि। न जाने कथं मे दिवसाः परिवर्तन्त इति। (पुत्र्यौ उद्दिश्य) पुत्र्यौ संन्यासिनं प्रणमतम्। तात एतयोः आशिषो यच्छ।

(ततः पुरुषौ प्रविशतः)

प्रथमः— मित्र। इतः प्रतिनिवर्तस्व। नातः परमनुसर।

द्वितीयः— सखे! इह लोके समागमः आकस्मिकः किंचित्कालीनश्चेति जानामि। आकस्मिकसमागमेन किंचित्कालं सहैव मार्गानुक्रमणं ततश्च वियोगः इति जानामि। पुनर्मिलनमाशासन्तः इदानीं वियुज्यामहे।

प्रथमः— आवयोः समागमः विरहश्च जगच्चक्रपरिवर्तनस्य अंशभूतौ। न नक्षत्राणि विशेषतः एतौ पश्यन्ति।

द्वितीयः— आवयोः समागमस्य कारणभूतानि नक्षत्राणि प्रणमावः। किंचित्कालीनोऽयं समागमः बहुकालीन इव प्रत्यभात्।

प्रथमः— सखे! क्षणं पश्चात् परिवृत्य पश्य।

अन्धकारे ईषदिव दृश्यमानं तत् जलम्, जलप्रान्ते च वृक्षान् पश्यसि ननु? अस्माकं ग्रामः अन्धकारनिमग्नः। गृहदीपास्तावत् दृश्यन्ते। के दीपाः अस्माकं गृहदीपाः इति तर्कय।

द्वितीयः— तर्कयामि। के तावत् अस्माकं गृहदीपा इति प्रत्यभिज्ञातुं शक्नोमि।

प्रथमः— एते खलु दीपाः अस्मत्प्रयाणकाले व्यतीतकालेन विमुक्ताः प्रेमार्द्रदृष्टयः। कतिपयपदक्रमणे गाढान्धकार एव स्यात्।

(निष्क्रान्तौ)

संन्यासी— रात्रिः अन्धकारभूयिष्ठा शून्या च। परित्यक्तनारीव उपविष्टा। नक्षत्राणि तस्याः तप्तानि बाष्पाणि। वत्से! तव कोमलहृदयस्य परितापेन मम आयुषः सर्वाः रात्रयः परितप्ताः। मे मूर्ध्नि तव कोमलहस्तस्य परामर्शमद्यापि अनुभवामि। सोऽयं परामर्शः तव अश्रुभिः सम्पृक्तः। तव परित्यागावसरे श्रुताः तव गद्गदाः अद्यापि मे हृदयमुद्वेजयन्ति। आमरणंताननुभवामि।

## चतुर्थं दृश्यम्

संन्यासी— परित्यक्तं संन्यासव्रतम्। भिन्नोऽयं दण्डः। छिन्नं भिक्षापात्रम्। कालसागरे संचरन्तीं संसारनावं पुनः प्रविशामि। पुनः संसारयात्रायां यात्रिको भवामि। मूढेन मया सूर्यस्य नक्षत्राणां च प्रकाशं हित्वा खद्योतकीटप्रकाशेन मुक्तिमार्गः अन्विष्टः। सर्वान् परित्यज्य एकाकिना मुक्तिमार्गतरणाय प्रयतितम्। आकाशमुत्पत्य संचरन् पक्षी नहि दिगन्तशून्ये लयमपेक्षते किन्तु वासवृक्षं

प्रत्यागन्तुमिच्छति। नूनमिदानीमहं मुक्तः। नेति नेति मार्गात् मुक्तः। शून्यप्रयत्नात् मुक्तः। आपूर्णमिव पूर्णम्। एतस्य सत्यं प्रेम एव जानाति। वत्से। त्वं एतत्संसारस्य जीवातुभूता। नाहं त्वां परित्यक्तुं शक्नोमि।

(ततः प्रविशति ग्रामवृद्धः)

संन्यासी— आर्य। रघोः सुता कुत्र तिष्ठतीति जानासि किम्?

ग्रामवृद्धः— ग्रामोऽयं तया परित्यक्तः। वयं च परितुष्टाः।

संन्यासी— सा कुत्र गता?

ग्रामवृद्धः— कुत्रेति किं पृच्छसि? तस्याः सर्वं जगदेकविधमेव।

संन्यासी— मम वत्सा निर्जने जनमन्वेष्टुं गता। नूनं मामधिगच्छति।

(ग्रामीणसमूहः प्रविशति)

प्रथमः— अद्य राजकुमारस्य विवाहः।

द्वितीयः— कदा मुहूर्तः?

तृतीयः— कन्यावरयोः मुहूर्तचिन्ता। अस्माकं किमनया चिन्तया?

काचित् स्त्रीः— अपूपानि दास्यन्ति किल।

प्रथमः— नहि। नगरस्थो मे पितृव्यः भणति 'दध्यन्नं दास्यन्ती' ति।

द्वितीयः— सुष्ठु।

चतुर्थः— जलप्रचुरं दधि इति मे मतिः।

प्रथमः— मूर्ख। राजकुमारविवाहे कथं जलप्रचुरं दधि स्यात्।

चतुर्थः— न वयं राजकुमाराः। दरिद्रेभ्यः दीयमाने दध्नि कथमपि जलं प्रविशति।

प्रथमः— पश्य। अंगारविक्रेतुः तनयः राजकुमारविवाहदिनेऽपि स्वकार्यनिरतः। नैतत् सोढव्यम्।

द्वितीयः— यदि सः न विरमति तर्हि अंगारेणैव तं भस्मीकुर्मः।

संन्यासी— कुत्र रघोः सुता गता इति किं भवत्सु कोऽपि जानाति?

स्त्रीः— सा दूरदेशं गता।

संन्यासी— कुत्र?

स्त्रीः— न वयं जानीमः।

प्रथमः— न सा राजकुमारस्य वधूः इत्येतावत्तु जानीमः।

(विहस्य निष्क्रान्ताः)

(बालकेन सह काचित् स्त्रीः प्रविशति)

स्त्रीः— तात। प्रणमामि। मम बालः मूर्ध्ना भवतः पादौ स्पृशतु। रुग्णः एषः। आशिषो यच्छ।

संन्यासी— वत्से! न अहं इदानीं संन्यासी। भवत्याः प्रणामेन न मां विडम्बय।

स्त्रीः— तर्हि को भवान्? किं भवता क्रियते।

संन्यासी— अहमन्विष्यामि।

स्त्रीः— किमन्विष्यसि?

संन्यासी— प्रच्युतं मे जगदन्विष्यामि। रघोः सुता कुत्र वर्तते इति जानासि किम्?

स्त्रीः— रघोः सुता सा मृता।

संन्यासी— नहि नहि, न सा मरिष्यति। न सा मरिष्यति।

स्त्रीः— संन्यासिन्। तस्याः मरणेन अमरणेन वा किं ते प्रयोजनम्?

संन्यासी— तस्याः मरणं न केवलं मम उद्वेगावहं किन्तु सर्वस्य जगतः।

स्त्रीः— नाहं तव आशयमवगन्तुं प्रभवामि।

संन्यासी— सा न कदापि मरिष्यति, न कदापि मरिष्यति।

(निष्क्रान्ताः सर्वे)

समाप्तमिदं रूपकम्।

इति रवीन्द्रनाथठाकुरेण वंगभाषायां विरचितस्य

संन्यासीनामरूपकस्य

पांडुरंगि तम्मण्णाचार्यसुत कृष्णाचार्यकृतः

संस्कृतानुवादः समाप्तः।

## मालिनी रूपके पात्राणि

राजा

राज्ञी

मालिनी

सुप्रियः

क्षेमंकरः

ब्राह्मणाः

राजकुमारः

भृत्यः

# मालिनी

## प्रथमे अंके प्रथमं दृश्यम्

(नृपप्रासादस्य रथ्याभिमुखी प्रतर्दी)

मालिनी— मम जीवने सः क्षणः आगतः यदा मम जीवनं कमल-दलोपरि पतिततुषारकण इव कालस्य हृदयोपरि कंपते। नेत्रे मे निमीलतः। आकाशे कलकलमाकर्णयामि। कापि हृदयवेदना मां बाधते। न जाने किं कारणमिति।

(राज्ञी प्रविशति)

राज्ञी— वत्से! किमिदम्? तव यौवनस्य सौन्दर्यस्य च सदृशान् वस्त्रालंकारान् परिधातुं किं विस्मरसि? कुत्र ते अलंकाराणि? अयि मम रमणीयारुणोदये! कथं तव अंगानि सुवर्णशून्यानि स्युः।

मालिनी— अयि मातः! सन्ति केचन ये राजभवने जाता अपि दरिद्राः। ये दारिद्रे एव संपदमन्विषन्ति न तान् संपत् सज्जति।

राज्ञी— अव्यक्तवर्णरमणीयवाणी मे वत्सा ईदृश कूटवाण्या भाषते इति चित्रमेतत्। तव वचनानि आकर्ण्य कंपते मे हृदयम्। कुतः त्वया इयं नूतना निष्ठा अधिगता या अस्माकं सनातनशास्त्रविरोधिनी? यैः बौद्धभिक्षुभिः त्वमवबोधिता ते वामाचाराः ऐन्द्रजालिकाः इति जनाः वदन्ति। ते मिथ्यावचनैः जनान् मोहयित्वा तेषां मनः वशीकुर्वंति।

किं धर्मः यत्र कुत्रापि अन्वेषणीयः ? किं धर्मः सूर्यप्रकाशवत् न स्फुटं चक्षुर्गोचरः ?

अहं मुग्धा स्त्री न अहं पुरुषाणां मतानि तत्त्वानि वा जानामि। स्त्रीणां पूज्यं वस्तु तु पतिरूपेण पुत्ररूपेण च उपतिष्ठति इति तावत् जानामि।

(ततः परविशति राजा)

राजा— पुत्रि! चंडवातानीताः मेघाः मम प्रासादस्य परितः समावृताः। संकटदायिनः ते मार्गात् निवर्तस्व। ईषत्कालं विरम।

राज्ञी— अंधकारावृताः इमाः वाचः।

राजा— अयि बालिशे पुत्रि! अस्मिन् सनातने देशे तव नूतनं मतं यदि प्रसारयितुमिच्छसि तर्हि अपिं 'मा तावत् तीरवासिनः आप्लावयन् महानद्याः अकांडप्रवाह इव, मतं ते प्रवहतु, तव श्रद्धा तवैवास्तु, लोकव्याकोपं मा कुरु, मा च लोकावज्ञाम्।'

राज्ञी— मा तावत् मम वत्सामधिक्षिप। तव कुटिलां नीतिं मा शिक्षय। यदि मे वत्सा स्वीयं गुरुं वृणोति स्वीयं पन्थानमुसरति कः तां धिक्कर्तुं प्रभवति।

राजा— राज्ञि! मम प्रजाः उद्विग्नाः। मम पुत्रीं देशात् निष्कासितुमारटंति।

राज्ञी— तव पुत्र्याः निष्कासनम्!

राजा— ब्राह्मणाः तस्याः पाषंडमार्गात् भीताः संघीभूताः। किं च...

राज्ञी— पाषंडमार्ग इति। किं सर्वाणि तत्वानि तेषां धूलि दुर्गंधितपुस्तकेषु एव संति? क्षिपन्तु ते कीटकग्रस्तानि स्वीयमतानि। स्वीकुर्वन्तु पाठान् मम वत्सायाः सविधे। राजन्! कथयामि त्वां 'न सा सामान्या बाला। सा एषा परिशुद्धा अग्निज्वाला। काचन दैवीशक्तिः तस्यां अवातरदिव। मा तां अधिक्षिप। अन्यथा तवैव भालपट्टं घट्टितं स्यात् अश्रुपातश्च स्यात्। सा च त्यक्तदेशा स्यात्।

मालिनी— तात! तव प्रजानां प्रार्थनामनुजानीहि। स महान् क्षणः आगतः। निष्कासय माम्।

राजा— कथमेतत् वत्से। किमपेक्षितं ते नास्ति तव पितृगृहे?

मालिनी— तात शृणु तावत्। ये तावत् मम निष्कासनाय आक्रोशन्ते ते मह्यमेव विलपंति।

अयि मातः न मे शब्दाः लभन्ते मम चेतसः आशयं प्रकाशयितुम्। विन चिंतां पुष्पाणि अवसृजन् वृक्ष इव विना अनुतापं मां परित्यज। अहं सर्वान् जनान् गच्छानि। लोकः राज्ञः सकाशात् मां आदाय आत्मसात् कर्तुं यतते।

राजा— वत्से! न अहं ते आशयं अवगच्छामि।

मालिनी— तात! भवान् राजा। दृढचित्तः भव। स्वकर्तव्यं अनुतिष्ठ।

राज्ञी— वत्से! किं न ते तत्र स्थानं यत्र तव जन्म? किं भुवनस्य भारः तव लघुस्कन्धौ आरोढुं प्रतीक्षते?

मालिनी— जागृती अपि स्वप्नं पश्यामि। घोरः अयं वातः। कल्लोलं सलिलम्। अंधकारावृता रात्रिः। दिवः कच्छे नौः बद्धा। कुत्र पोताध्यक्षः। को वा जनान् आवसथान् नेष्यति। अहं पंथानं जानामीति विभावयामि। मम स्पर्शेन नौः पुलकिता प्रवहति।

राज्ञी— राजन्! किं श्रुतं त्वया? कस्या वा इमानि वचनानि। किमेतानि अस्याः बालायाः वचनानि? किमेषा तव तनया? किमेषा मया प्रसूता?

राजा— अथ किम्। रात्रिः उषसं प्रसूते। न एकस्याः रात्र्याः किंतु विश्वस्य उषसं प्रसूते।

राज्ञी— राजन्! एतां स्वगृहे अवस्थापयितुं नास्ति कश्चन उपायः? वत्से तव केशराशिः स्कन्धयोः लुठते। बध्नामि तावत्। राजन् किं ते जनाः अस्याः निष्कासनं मंत्रयंति? यदि इदं तेषां मतं तर्हि नूतनं मतमेव प्रवहतु। एते ब्राह्मणाः नूतनतया तत्वमवगच्छंतु।

राजा— राज्ञि! वत्सां एनां प्रासादप्रतद्याः अन्यत्र प्रेषयामः। पश्य तावत् रथ्यायां जनसंकुलम्।

## द्वितीयं दृश्यम्

(प्रासादप्रतद्याः पुरतः रथ्यायां ब्राह्मणानां संकुलं प्रविशति। ते घोषंते)

ब्राह्मणाः— राजतनया निष्कास्यताम्।

क्षेमंकरः— सुहृदः दृढनिश्चयाः संतु भवंतः। स्त्रीशत्रुः नितरां

भेतव्यः। तस्याः विरोधाय युक्तिवाचः विफलाः। सैनिकास्तु लज्जावनताः भवंति। पुरुषकारः तस्याः शक्तिशून्यताया एव शरणंगतः भवति। अस्माकं हृदयेषु एव सा आश्रयं भजते।

प्रथमः ब्राह्मणः— राजानं दृष्ट्वा तस्यैव नीडात् विषसर्पः कश्चन फणां उत्थाप्य धर्मस्य हृदयं दष्टुं यतते इति निवेदनीयम्।

सुप्रियः— धर्म इति? जडः अस्मि। न तव आशयं जानामि। कथय तावत् किं मुग्धायाः बालायाः निष्कासनं धर्मः?

प्रथमः ब्राह्मणः— सुप्रिय त्वं घातुकः, अस्माकं साहसानां विघ्नकर्ता।

द्वितीयः ब्राह्मणः— अस्माकं धर्मस्य रक्षणाय वयं संघटिताः। भित्तौ छिद्रमिव अवज्ञामुद्रितोष्ठयोः अपहासरेखेव त्वं इह आगतः असि।

सुप्रियः— संख्याबलेन त्वं तत्त्वं निर्धारयितुं अपेक्षसे। तुमुलघोषणासु युक्तिवादं निमज्जयितुमिच्छसि।

प्रथमः ब्राह्मणः— सुप्रिय! गर्वभराक्रांतमिदं वचनम्।

सुप्रियः— न अहं गर्वभराक्रांतः। किं तु, ये स्वसंकुचितहृदयानुसारेण शास्त्रं व्याख्यास्यंति ते गर्वभराक्रांताः।

द्वितीयः ब्राह्मणः— निष्कास्यतां अयम्। न एषः अस्मदीयः।

प्रथमः ब्राह्मणः— राजतनया निष्कासनीया इति अस्माभिः सर्वैः अंगीकृतम्। यः अन्यथा चिंतयति तेन संघः अयं परित्याज्यः।

सुप्रियः— ब्राह्मणाः! भवतां संघटने मम प्रवेशानुमतिः प्रमाद एव। न अहं भवतां छाया नापि प्रतिध्वनिः। परुषं वचः सत्यं इति न अहं अंगीकरोमि। वलात्कारेण प्रतिष्ठापितं धर्मं मदीयं इति अंगीकर्तुं लज्जितः भवामि। (क्षेमंकरं दृष्ट्वा) प्रियमित्र, अहं इतः गच्छामि।

क्षेमंकरः— अहं न गच्छामि। त्वं दृढचित्तः इति अहं जानामि। वादसमये एवं त्वं संदेहान् उट्टंकयसि। सुहृद्वर! इदानीं मौनं भज। प्रतिकूलः अयं कालः।

सुप्रियः— अंधश्रद्धानुसरणं सर्वथा क्लेशावहम्। बालां तां गृहात् निष्कास्य धर्मरक्षणं मूढतैव। तया किमपराद्धम्? सत्यं प्रेम च धर्म इति तयापि अंगीक्रियते किल! एते एव धर्मस्य सारभूते।

क्षेमंकरः— सारभूतः धर्मः एकः एव। अनुष्ठानप्रकारास्तु नाना। जलं एकमेव। किन्तु नानाजनेभ्यः नानाविधतया संगृहीतम्। भवत्समीपे एवं भवदीयः निर्झरप्रवाहः स्यात्। यदि भवत्प्रतिवेशिनः तेषां पूर्वजैः निर्मितं जीर्णदूर्वागुल्मं पुराणवृक्षपरिवृतं सरः गच्छंति न तान् तिरस्कुरु।

सुप्रियः— मित्र! अहं त्वां अनुसरामि यथा अद्य यावत् कृतम्। न त्वया सह विवदामि।

(तृतीयः ब्राह्मणः प्रविशति)

तृतीयः ब्राह्मणः— सुवार्तां निवेदयामि। अस्माकं वचनानि फलप्रदानि संजातानि। राज्ञः सेना प्रकटमेव अस्मत्पक्षं आयातीव।

द्वितीयः ब्राह्मणः— किं सेना! न अहं एतद् रोचे।

प्रथमः ब्राह्मणः— अहमपि न रोचे। राजाभिद्रोहः एषः।

द्वितीयः ब्राह्मणः— क्षेमंकर! न अहं एतादृशान् अतिभूमिं गतान् उपायान् अनुमोदामि।

प्रथमः ब्राह्मणः— अस्माकं श्रद्धा अस्मभ्यः जयं संपादयति। न आयुधाः। तपश्चरामः। मंत्रान् पठामः। लोकपालान् देवान् आह्वयामः।

द्वितीयः ब्राह्मणः— देवि आगच्छ। तव क्रोधसंरंभः तव भक्तानां आयुधः। अवतर श्रद्धाहीनानां अंधाहंकारं धूलीपटलीकुरु। अस्माकं श्रद्धायाः सामर्थ्यं स्थापय। अस्मान् जयपथं नय।

सर्वे— मातः त्वां याचामहे। उन्नतायाः दिवः अवतर। मर्त्येषु तव कार्यं निर्वह।

## तृतीयं दृश्यम्

(ततः प्रविशति मालिनी)

मालिनी— अहं आगता

(अन्ये सर्वे प्रणमंति, क्षेमंकरः सुप्रियश्च तूष्णीं तिष्ठतः)

द्वितीयः ब्राह्मणः— देवि अंततः त्वं समागता। तव भीकरीं शक्तिं उपसंहृत्य बालिकायाः कोमलं सौंदर्यमादाय नरस्य दुहिता इव

समायाता। कुतः त्वं समागता? का ते इच्छा?

मालिनी— भवतां आह्वानेन विप्रवासभूमिं प्राप्तास्मि।

द्वितीयः ब्राह्मणः— तव पुत्रैः आहूता दिवः विप्रवासभूमिं इमां प्राप्तासि।

प्रथमः ब्राह्मणः— अयि मातः क्षमस्व। लोकः अयं विनाशभयकंपितः। तव सहायार्थं आर्तं आक्रंदति।

मालिनी— अहं न कदापि युष्मान् परित्यजामि। युष्मासु अहं मुक्तद्वारा इति जानामि। मम निष्कासनार्थं युष्माभिः एव आक्रोशः कृतः। तेन राजभोगसमावृता अहं प्रबुद्धा।

क्षेमंकरः— इयं राजकुमारी।

सर्वे— इयं राजतनया।

मालिनी— युष्माकं गृहाणि मद्गृहाणि इति भावयितुं अहं मद्गृहात् विप्रवासिता। तथापि कथयंतु भवंतः किं मां अपेक्षंते इति। किं युष्माभिः विविक्ते एकाकिनी वसंती अहं आहूता? मन्ये न एषः स्वप्नः आसीत् इति।

प्रथमः ब्राह्मणः— अयि मातः भवती आगता अस्माकं हृदयांतराले कृतपदा च।

मालिनी— अहं राजभवने जाता। न कदापि गवाक्षादपि ईक्षितवती। श्रुतं मया लोकः दुखतप्त इति। किंतु दूरतः मे सः लोकः आसीत्। कुत्र तस्य वेदना इति न मया ज्ञातम्। कथं अन्वेष्टव्या इयं वेदना इति मां बोधय।

प्रथमः ब्राह्मणः— तव मधुरा वाणी अस्माकं नेत्राणि अश्रुपूर्णानि करोति।

मालिनी— मेघावरणात् कौमुदी निस्सृता। आकाशे शांतिः प्रसृता। कौमुदीप्रकाशे समस्तं लोकं बाहुभ्यां आनयतीव। वृसपंक्ति-च्छायायां प्रसरंती रथ्या लुप्तेव भवति। गृहाणि दृश्यंते। देवमंदिरं च भवति। दूरतः विद्यमानं निर्जनं नदीतीरं अस्फुटं भाति। स्वप्नदृष्टमेघात् अकांडवृष्टिरिव मानवलोकं अहं आगता।

प्रथमः ब्राह्मणः— भवती अस्य लोकस्य देवात्मशक्तिः।

द्वितीयः ब्राह्मणः— भवत्याः निष्कासनं आरटंत्यः अस्माकं जिह्वाः किं न वेदनास्फुटिताः ?

प्रथमः ब्राह्मणः— अहो ब्राह्मणाः! अस्माकं मातरं तस्याः स्वगृहं प्रापयामः।

सर्वे— (उच्चैः घोषंते) जयतु जगन्माता। मनुकुलतनया हृदयंगता माता जयतु।

(तैः समावृता मालिनी निष्क्रांता)

## चतुर्थं दृश्यम्

क्षेमंकरः— अपसरतु माया। सुप्रिय स्वप्ने संचरन् इव कुत्र प्रस्थितः।

सुप्रियः— मा मां धारय। गच्छामि।

क्षेमंकरः— धारय आत्मानम्। अंधपतंगराशिरिव किं त्वमपि वन्हौ पतसि?

सुप्रियः— क्षेमंकर किं एषः स्वप्नः?

क्षेमंकरः— स्वप्न एव। नेत्रे उद्घाटय। जागृतः भव।

सुप्रियः— तव स्वर्गतृष्णा मिथ्या। तत्त्वानां कानने वृथा पर्यटितम्। न शांतिः लब्धा। जनसंकुलसेवितः देवः ग्रन्थप्रतिपादितो वा देवः न मम देवः। एते मम शंकाः न परिहृताः नापि मे मनः समाहितम्।
इदानीं अहं जनेषु प्रतिष्ठितप्राणं देवं अधिगतोऽस्मि।

क्षेमंकरः— मित्र भयावहः सः क्षणः यदा मनुष्यहृदयं आत्मानमेव वंचयितुमारभते। तदा अंधा अपेक्षा तस्य मंत्रः भवति। उत्प्रेक्षा देवपीठं आक्रमति।
किं सुदूरं दृश्यमानः मृदुमनोहरमेघमालायां स्वपन् चन्द्रः विश्वस्य ध्वजलांछनम्? शुष्कं दिनं श्वः पुनः आयाति। अशनायापीडितं जनसंकुलं सहस्रपाशैः जीवनसाधनसमुद्रमाकर्षति। तदा इयं कौमुदी रात्रिः मायानिर्मितच्छाया इव स्वाप इव मायाप्रपंचस्य भित्तिचित्र इव स्मर्यते। स्त्रीणां छलसौंदर्य परिकल्पितं इंद्रजालमपि

एतादृशम्। इदं च न तत्वं भवितुं अर्हति। स्वकपोलकलिपतं मतं मध्यान्ह्रविकिरणदाह्जनितपिपासां प्रशमयितुं न प्रभवति।

सुप्रियः— हंत न अहं किमपि जानामि।

क्षेमंकरः— ते स्वप्नपरिघात् बहिरागच्छ। पुरतः पश्य। पुरातनं गृहं अग्निना दह्यते। गताः संवत्सराः एव अस्य शिशवः। अस्माकं पितृपितामहानां आत्मानः भग्ननीडानां उपरि पक्षिणः इव विनश्यमानगृहस्य उपरि परितः आपतंति।
किं अयं डोलायमानमनस्कताकालः। रात्रिः अंधकारावृता। शत्रवः द्वारं आघट्टयंति। नगरवासिनः गाढनिद्रावृताः। विपरीत-ज्ञानासवपानमत्ताः जनाः स्वभ्रातृणां कंठान् आकुंचयंति।

सुप्रियः— अहं भवदाज्ञानुवर्ती भवामि।

क्षेमंकरः— मया इतः दूरं अपसर्तव्यम्।

सुप्रियः— कुत्र! किमर्थम्।

क्षेमंकरः— विदेशान् गच्छामि। बाह्यतः सैनिकान् आनयिष्यामि। यतो हि अयं दावाग्निः प्रशमनाय रक्तधारां अपेक्षते।

सुप्रियः— अस्माकं सैनिकाः सन्नद्धाः एव।

क्षेमंकरः— तेभ्यः सहायापेक्षणं व्यर्थप्रयासः एव। इतः पूर्वमेव ते शलभाः इव अग्निपतनोन्मुखाः। किं न शृणोषि कथं ते मूढाः

आक्रोशंतीति। समग्रा नगरी उन्मत्ता। स्वीयश्रद्धाप्रेताग्नौ स्वीयोत्सवप्रदीपान् दीपयति।

सुप्रियः— यदि त्वयां गंतव्यमेव तर्हि मां अपि नय।

क्षेमंकरः— तदेतत् द्रष्टुं मह्यं निरूपयितुं च त्वं अत्रैव तिष्ठ। परंतु नवनवोन्मेषि मिथ्यावादैः मा ते हृदयं मत्तः दूरीभवतु।

सुप्रियः— मिथ्याप्रचारः अद्यतनः। आवयोः मित्रता तु पुरातनी। बाल्यात् प्रभृति आवां सह अवस्थितौ। इदं प्रथमः अयं विरहः।

क्षेमंकरः— अयं विरहः अंतिमश्च भवतु। आपदि काले दृढतमबंधनानि अपि शिथिलानि भवंति। भ्रातरः भ्रातॄन् घ्नंति। मित्राणि शत्रवः भवंति।

रात्र्याः अंधकारे अहं अंधकारं प्रविशामि। पुनः द्वारं प्रतिनिवर्ते। मम मित्रं प्रज्वलितदीपः मां प्रतीक्षते इति आशासे आशां एनां मया सह नेष्यामि।

## पंचमं दृश्यम्

(राजप्रासादपतद्युर्यां स्थितौ राजा राजकुमारश्च प्रविशतः)

राजा— शंके मम पुत्र्याः निष्कासननिर्णयः इदानीं अवश्यकर्तव्यः इति।

राजकुमारः— देव! विलंबः संकटावहः इति मन्ये।

राजा— शनैः पुत्र शनैः। मम कर्तव्यनिर्वहणे मा संदिह्। अवश्यं तां निष्कासयामि।

(राज्ञी प्रविशति)

राज्ञी— राजन् कथय कुत्र मे वत्सा। किं अस्मत्तः अपि सा निगूहिता?

राजा— का

राज्ञी— मम वत्सा मालिनी।

राजा— किम्? न सा आत्मनः प्रकोष्ठे तिष्ठति?

राज्ञी— न सा तत्र उपलभ्यते। सेनया सह गत्वा नगरस्य सद्मनि सद्मनि तां अन्विष। नगरवासिभिः सा अपहृता। सर्वे ते निष्कास्यंताम्। समग्रा नगरी शून्यतां आपाद्यतां यावत् सा न प्रत्यर्पिता।

राजा— राज्यभ्रंशमपि अविगणय्य तां आनयामि।

(ब्राह्मणाः सैनिकाश्च प्रज्वालिताग्निकाष्ठहस्ताः मालिनीं आनयंति)

राज्ञी— निर्दये वत्से न कदापि मम नेत्रे त्वत्तः परावृते। कथं त्वां मां अविगणय्य बहिर्गता?

द्वितीयः ब्राह्मणः— राज्ञि मा तस्यै क्रुधिहि। अस्मभ्यः आशिषः दातुं सा अस्मद्गृहाणि आगता।

प्रथमः ब्राह्मणः— किं एषा केवलं त्वदीया। किं न सा अस्मदीयापि।

द्वितीयः ब्राह्मणः— अयि मातः न अस्मान् विस्मर। अपथं जीवनसागरं तारयितु भवती अस्माकं तारा।

मालिनी— मम गृहद्वारं भवद्भ्यः अपिहितम्। एताः भित्तयः इतः परं न अस्मान् विरहयंति।

ब्राह्मणाः— अनुगृहीताः वयम्। अस्माकं जन्मभूमिश्च।

मालिनी— अयि मातः! मया बाह्यं जगत् युष्मद्गृहांतरमानीतम्। मम शरीरपरिघः मया विसृष्टः। जगदात्मना मया ऐक्यं प्राप्तम्।

राज्ञी— वत्से इतः परं न भवती बहिर्यंतुं अर्हति। तव मम च कृते जगदेव अंतरानय।
इदानीं अपररात्रिः समीपे तिष्ठति। उपविश, आत्मानं प्रशमय। त्वयि प्रज्वलंती जीवनदीपशिखा तव नेत्रयोः निद्रां मुद्रापयति।

मालिनी— अयि मातः! अहं श्रांता। प्रकंपते मे शरीरम्। विशालः अयं लोकः। अयि मातः! गीतेन मां स्वापय। बाष्पाकुलिते मम नेत्रे। व्यथा मम हृदयं आवृणोति।

## द्वितीयः अंकः

### प्रथमं दृश्यम्

(राजप्रासादोद्यानम्)

मालिनी— किं ते कथयामि। न अहं वादकुशला। न मया तव ग्रन्थाः पठिताः।

सुप्रियः— अहं मूर्खपंडितेषु अन्यतमः पंडितः। सर्वे वादाः ग्रंथाश्च मया परित्यक्ताः। राजकुमारि मम धुरीणा भव। छाया-दीपशिखामिव अहं त्वां अनुसरामि।

मालिनी— ब्राह्मण! यदा त्वं प्रश्नान् पृच्छसि तदा कुंठिता मे मतिः भवति कथं ते प्रश्नाः उत्तरितव्याः इति न जाने।
सर्वं जानन् त्वमपि पश्नान् पृच्छसि इति चित्रमेतत्।

सुप्रियः— न अहं ज्ञानार्जनार्थं त्वां उपतिष्ठामि। विस्मृतं भवतु यद्यत् अहं जानामि। अनेक पंथानः संति। प्रकाशस्तु नास्ति।

मालिनी— हंत यथा यथा त्वं पृच्छसि तथा तथा मम बुद्धिदारिद्र्यं वर्धते।
कुत्र सः ध्वनिः यः विद्युच्छटा इव दिवः प्रसृतः मम हृदयं प्रविष्टः आसीत्। किं त्वया तस्मिन् दिने न आगतम्? किं ते संदेहाः न आविष्कृताः?
अधुना मया लोकः प्रत्यक्षं दृष्टः। मम हृदयं भीरुसंजातम्। महत्याः अस्याः नौकायाः कर्णधारता कथं निर्वहणीया इति न जाने। अहं एकाकिनी। लोकस्तु विशालः। दिवः प्रकाशस्तु सहसा आगत्य सहसा निवर्तते।
पंडितः मनीषी च भवान् मम साहाय्यं करोतु।

सुप्रियः— धन्यं आत्मानं मन्ये यदि त्वं मम साहाय्यं पृच्छसि।

मालिनी— भवेत् तादृशः कालः यदा विषादः मम जीवनप्रवाहं निरुणद्धि। जनसंमर्देऽपि मे दृष्टिः मयि एव परावर्तते। भयं च

मां आवृणोति। किं तदा त्वं तादृशनिस्सहायताकाले मे साहाय्यं करोषि ? आशाप्रदं एकं वचनं उच्चार्य पुनः जीवनोत्साहं प्रापयसि ?

सुप्रियः— तथा कर्तुं सन्नद्धं भवामि। मम हृदयं शुद्धं विनीतं च करोमि। भवत्याः सहायं कर्तुं मम चितं स्थिरं प्रशांतं च अवकल्पयामि।

(भृत्यः प्रविशति)

भृत्यः— त्वां द्रष्टुं नगरवासिनः आगताः।

मालिनी— अद्य न पश्यामि। क्षंतव्या इति विज्ञापय। श्रांतं मे मनः प्रशमयितुं अवकाशां अपेक्षे। श्रमपरिहाराय विरामः अपेक्ष्यते।

(भृत्यः गच्छति)

तव मित्रं क्षेमंकरमधिकृत्य वद। कथं वा ते जीवनं आसीत् कीदृशाश्च क्लेशाः अनुभूताः इति ज्ञातुं इच्छामि।

सुप्रियः— क्षेमंकरः मम मित्रं भ्राता प्रभुश्च। बाल्यात् प्रभृति तस्य चित्तं स्थिरं दृढं च आसीत्। मम विचाराश्च शंकाग्रस्ताः। तथापि तेन चंद्रेण कलंक इव अहं हृदयस्य अंतिके स्थापितः। तथापि दृढतमापि नौः ईषदपि छिद्रयुक्ता निमज्जत्येव।
क्षेमंकर! अहं त्वां निमज्जयामि इति तु स्वभावसिद्धमेव।

मालिनी— किं त्वया सः निमज्जितः ?

सुप्रियः— अथ किम्। यस्मिन् दिने तव मुखकांतिं दृष्ट्वा दिवः त्वयि अवतृतां वाणिं च श्रुत्वा राजद्रोहिणां रभसः लज्जया अवनतः

तद्दिने क्षेमंकरः अविचलितः आसीत्। मां विहाय देशान्तरं गत्वा सैनिकान् आनीय नूतनं मतं काशीनगरात् उन्मूलयामीति वदन् प्रयातः। ततः अत्र किं समजनि इति भवती जानाति एव। अहं त्वया नूतनायां जन्मभूमौ अवस्थापितः। 'यावज्जीवं मित्रता' इति एतत् बहोः कालात् वाङ्मात्रेण स्थितं सत्यतां आपादयितुं प्रतीक्षमाणं आसीत्। अस्य वचनस्य सत्यता त्वयि शरीरिणी दृष्टा। मम हृदयं मम मित्रं अनुशोचतिस्म। किं तु सः दूरे अवर्तत। ततः तस्य पत्रं अधिगतम्। पत्रे च तस्मिन् तेन लिखितं यथा —'नूतनं मतं रक्तधारायां निमज्जयितुं त्वां दंडयितुं च विदेशसेनया सह आगमिष्यामि' इति। तत्र विलंबं असहमानेन मया पत्रं तत् राज्ञे दर्शितम्।

मालिनी— सुप्रिय! किमर्थं त्वया आत्मा अनवहितः। किमर्थं त्वं भीतः। किं मम गृहे तस्य तेन आनीतानां सैनिकानां च अवकाशः नास्ति!

(राजा प्रविशति)

## तृतीयं दृश्यम्

राजा— सुप्रिय! आलिंग माम्। क्षेमंकरं चकितयित्वा बद्धुं काले अहं गतः। एकहोरामात्रविलंबे मयि गाढं निद्रांगते मम प्रासादोपरि अशनिपातः स्यात्। सुप्रिय त्वं मम परमं मित्रम्।

सुप्रियः— भगवान् मां मर्षतु।

राजा— राज्ञः प्रीतिः न निष्कला इति त्वं जानासि एव। यद् इच्छसि तद् वृणीष्व। कथय तावत् किं अभिलषसि इति।

सुप्रियः— राजन् न किमपि अभिलषामि न किमपि। द्वारं द्वारं भिक्षया जीवामि।

राजा— प्रार्थनामात्रेण नृपान् प्रलोभयतः विषयानपि लभसे।

सुप्रियः— न अहं तैः प्रलोभितः भवामि।

राजा— जानामि ते स्वांतम्। कस्मै चंद्राय करं प्रसारयसि इति जाने। असाध्यमपि प्रार्थयितुं साहसिकः भव। किं तूष्णीं असि। मालिन्याः निष्कासनाय कृतप्रार्थनं दिवसं स्मरसि किम्?

किं मम तनया पितुः गृहात् निष्कासनीया इति तामेव प्रार्थनां पुनरुच्चारयितुं अपेक्षसे।

पुत्रि! अस्य यूनः उपकारेण त्वं जीवसि इति जानासि खलु। किमिदं कठिनतरं यत् त्वं अस्य ऋणपरिहारं आत्मनः.................।

सुप्रियः— राजन् मयि अनुकंपस्व न इतः परम्। संति आराधकाः ये यावज्जीवं आराधनमेव सफलतां मन्यंते। यदि अहं एतादृशाराधकेषु परिगणितश्चेत् सुखी स्याम्। किंतु वंचनायाः संभावनतया राज्ञः सकाशात् अस्य स्वीकारः।

आर्ये! तव महिम्नः वैशाल्यं प्रसन्नतां च त्वं आवहसि। हीनहृदयस्य आर्तभावं त्वं न जानासि। तव प्रीत्यनुकंपयोः

अधिकतया अणुमात्रमपि न अहं याचे। सर्वप्राणिनः ते प्रीत्यनुकंपभाजिनः।

मालिनी— तात बंधनगृहीतस्य को वा दंडः?

राजा— सः मरिष्यति।

मालिनी— जानुभ्यां प्रणम्य क्षंतव्यः अयं इति याचे।

राजा— वत्से सः राजद्रोही।

सुप्रियः— राजन्! किं धर्मनिर्णयं करोषि! यदा त्वां दंडयितुं स आगतः तेनापि धर्मनिर्णयः कृतः। न सः तव राज्यं अपहर्तुं आगतः।

मालिनी— तात! तस्य प्राणाः प्रदीयंताम्। तदानीमेव तव प्राणान् रक्षयितुः मित्रतां अर्हसि।

राजा— सुप्रिय! त्वं किं वदसि? किं अहं मित्रं मित्राय दद्याम्!

सुप्रियः— स एषः नृपप्रसादः।

राजा— काले प्रसादं दर्शयामि। तव मित्रं पुनः प्राप्नोषि।

किंतु नृपप्रसादस्य न तत्र विरामः। तव प्रतीक्षायाः अधिकतरं देयम्। न केवलं संभावनाविधया।

त्वया मम हृदयं जितम्। मम हृदयं श्रेष्ठतमं रत्नं ते प्रदातुं अभिलषति।

वत्से मालिनि! कुत एषा अदृष्टपूर्वा त्रपा तव प्रभातं न आ यावत्

पाटलवर्णस्पृष्टं आसीत्। तस्य प्रकाशः शुक्लः नेत्रहारी च आसीत्। अद्य तु कोमलं बाष्पं मधुरं नेत्रे आवृणोति।

(सुप्रियं उद्दिश्य)

मे पादौ परिहर। उत्तिष्ठ मम हृदयांतिकं आगच्छ। सुखं मे हृदयं दुनोति। क्षणं विसृज माम्। एकाकी मालिन्या सह भवितुं अभिलषामि।

(सुप्रियः निष्क्रमति)

मम वत्सां पुनः प्राप्तवान् इति विभावयामि। न गगनचुंबि प्रकाशमाननक्षत्रमिव किंतु क्ष्मौ विकसि मधुरपुष्पमिव। सा एषा मम तनया। मम हृदयवात्सल्यभूमिः।

(भृत्यः प्रविशति)

## चतुर्थं दृश्यम्

भृत्यः— बंधनगृहीतः क्षेमंकरः द्वारि तिष्ठति।

राजा— इह तं आनय। एषः स्थिरचक्षुः उन्नतशिराः प्रशान्ते झंझावाते अविचलन् मेघ इव भालच्छायायुत इह आगच्छति।

मालिनी— अस्य अंगेषु बद्धा आयसशृंखला स्वयमेव लज्जते। महतां अवज्ञा आत्मनः एव अवज्ञायां फलति। बंधनं अपाकुर्वन् प्रभुरिव भाति।

राजा— कीदृशं दंडं उत्प्रेक्षसे ?

क्षेमंकरः— मरणदंडम्।

राजा— यदि क्षम्यते ?

क्षेमंकरः— मम कार्यं पूरयितुं समयं लभेयम्।

राजा— तव प्राणेषु न आस्थां अवलंबसे इति मन्ये। अंतिमा यदि काचन आशा स्यात् ब्रूहि ताम्।

क्षेमंकरः— मरणात् पूर्वं मम मित्रं सुप्रियं द्रष्टुं इच्छामि।

राजा— (भृत्यं उद्दिश्य) सुप्रियं आह्वय।

मालिनी— तात! तस्य मुखे काचन शक्तिः वर्तते या मां भीषयति। मा तावत् सुप्रियः अत्र आगच्छतु।

राजा— वत्से! तव भयं निर्मूलम्। (सुप्रियः प्रविशति बाहू प्रसार्य क्षेमंकरं उपसर्पति)

क्षेमंकरः— मुहूर्तं तिष्ठ। प्रथमं आवयोः वचनव्यक्तिः भवतु। ततः प्रीतिसंमानना विनिमयः। अंतिकं आगच्छ। अहं वाचि अकुशलः इति त्वं जानासि। कालावकाशः अपि लघीयान्। मम सत्वपरीक्षा समाप्ता। न तव सत्त्वपरीक्षा अद्यापि समाप्ता। ब्रूहि किमर्थं एतादृशं कर्म कृतम् ?

सुप्रियः— मित्र न त्वं मां जानासि। स्नेहं परित्यज्यापि श्रद्धा मया पालनीया आसीत्।

क्षेमंकरः— सुप्रिय तव दशां अहं जानामि। दृष्टं मया तस्याः बालायाः स्फुरदंतःप्रकाशं प्रकटांतस्स्वरं मुखम्।

त्वया पितृपरंपरागता श्रद्धा राष्ट्रहितं आत्मा च तस्याः प्रज्वलितनेत्रयोः आहुतीकृतानि। द्रोहतलं अवलंब्य नूतनं मतं निर्मितम्।

सुप्रियः— मित्र! सत्यं उक्तं त्वया। मम श्रद्धा तस्याः द्वारा परिपूर्णतां प्राप्ता। तव धर्मग्रंथाः मयि मूकाः। सनातनसृष्टिग्रंथः तस्याः नेत्रप्रकाशव्दारा मया पठितः। तत्र च मानवतायाः प्रेम्णश्च परमः धर्मः अवगतः। अयं धर्मः मातृवात्सल्यद्वारा सुतान् याति। सुतप्रेमद्वारा मातरं आयाति। दातुः दानं इदं प्रतिगृहीतुः हृदयमेव प्रविशति।

यदा मया तस्याः प्रशांतं प्रेममयं प्रचुरप्रकाशं च मुखं दृष्टं तदानीमेव पुरुषहृदयांतरलगतं अनंततत्वं प्रकाशयंती नूतना इयं श्रद्धा मया आत्मसात् कृता।

क्षेमंकरः— मयापि कदाचित् तस्मिन्नेव मुखदृष्टिः बद्धा आसीत्। धर्मः जनानां हृदयं दिवः नेतुं स्त्रीरूपेण आगतः इति क्षणं चिंतितं च। मम हृदयांतरालात् मुहूर्तं मधुरगीतं आविर्भूतं आशाश्ज मे विकसिताः। तथापि किं मया एतानि मायाजालानि न भग्नानि? देशांतराटनं न कृतम्? किं मया हीनजनेभ्यः अवज्ञा न अनुभूता? तव विरहः न सोढः?

त्वं मम बाल्यसखा। अस्मिन् अवसरे किं त्वया अनुष्ठितम्? राज्ञः उद्यानवृक्षच्छायायां जडवत् उपविशन् तव व्यामोहमेव धर्म इति मिथ्यास्वप्नं कल्पयन् कालं अनयः।

सुप्रियः— मित्र किं इदं जगत् विभिन्नस्वभावानां जनानां स्थानं कल्पयितुं न अवकाशयुतम्? गगने दृश्यमानानि अनंतानि नक्षत्राणि किं एकाधिपत्याय युध्यंति। किं विभिन्नाः श्रद्धाः विभिन्न-मनसां जनानां प्रशांतया प्रकाशं प्रदातुं न समर्थाः?

क्षेमकरः— इदं शब्दजालं केवलं शब्दजालम्। अनंतमपि इदं जगत् सत्यानृतयोः सौहृदेन सहावस्थानाय न सावकाशम्। धान्यराशिषु कंटककणाः स्युः किंतु प्रीतिः द्वेषेण सह न वसति। यदि कश्चित् स्थिरामपि मित्रतां द्रोहेण छिनत्ति चेत् किमिदं क्षंतव्यम्? किं क्षमा वंचनावकाशदानपर्यंतमपि विशाला स्यात्?
जगदिदं न वज्रकठिणं येन एतादशान् पापकारिणः विरोधाभासान् सहेत।

सुप्रियः— (मालिनीं उद्दिश्य) एताः सर्वाः निंदाः वेदनाश्च त्वदर्थं सहे। क्षेमंकर! तव श्रद्धारक्षणाय त्वं प्राणान् समर्पयसि। अहं तु मम प्राणेभ्यः अधिकं तव स्नेहरक्षणाय समर्पयामि।

क्षेमकरः— अलं बालिशभाषितेन। मरणधर्मासने सत्यस्य परीक्षा स्यात्। स्मरसि किं तत् 'यदा आवां छात्रौ स्तः समग्रायां रात्रौ विवदंतौ प्रातः गुरुसमीपं गत्वा क्षणमात्रावसरे कस्य वादः साधुः इति निश्चयं लभेते स्म।

इदानीमपि तादृशः प्रातः कालः भवतु। अंतिमं निर्णयस्थानं गच्छावः। मृत्योः पुरतः प्रश्नान् उत्थापयावः। तत्र आवयोः संदेहमालिन्यं विश्वासक्षणे एव विगलितं भवति। सनातनसत्यं पर्वतशरवराणीव उन्नततया भाति। मूढौ आवां साट्टहासं परस्परं पश्यावः।

प्रियमित्र! मृत्युदेवतायाः पुरतः तद् वस्तु आनय यत् त्वं अमृतं श्रेष्ठतमं च मन्यसे।

सुप्रियः— एवं अस्तु।

क्षेमंकरः— तर्हि मम हृदयसमीपं आगच्छ। अनंतावकाशे त्वया तव मित्रात् दूरं प्रयातमासीत्। इदानीं अनंतकालं समीपं आगच्छ। त्वयि प्रीतिमतः मम सकाशात् मृत्युदानं स्वीकुरु (आयसशृंखलया सुप्रियं ताडयति। सुप्रियः निपतति)

क्षेमंकरः— (मृतं सुप्रियं आलिंग्य) इदानीं वधाधिकृतः पुरुषः आहूयताम्।

राजा— कुत्र मे खड्गः ?

मालिनी— तात! क्षमस्व क्षेमंकरम्।

समाप्तमिदं रूपकम्

इति रवीन्द्रनाथ ठाकुरेण वंगभाषायां विरचितस्य
मालिनी नाम रूपकस्य
पांडुरंगि तमण्णाचार्यसुत कृष्णाचार्यकृतः
संस्कृतानुवादः समाप्तः

## नृपः महिषी च रूपके पात्राणि

विक्रमः (नृपः)

सुमित्रा (महिषी)

देवदत्तः

अमात्यः

सेनाधिपतिः

भृत्यः

पुरोहितः

शंकरः

अमरुः

इला

# नृपः महिषी च

## प्रथमः अंकः

(प्रासादोद्याने विक्रमनृपः महिषी सुमित्रा च)

**विक्रमः**— प्रिये! मां आगंतुं किं एतावान् विलंबः कृतः?

**सुमित्रा**— राजन्! यत्र कुत्रापि संती अपि अहं भवदीया एव इति भवान् जानाति एव। तव गृहं तत्रस्थकार्यं च अहं तव दृष्टिपथात् दूरे अवस्थातुं कारणं न तु त्वत् दूरे स्थातुम्।

**विक्रमः**— गृहं गृहकार्यं च परित्यज। मम हृदयं मत्प्रपंचाय त्वां निर्मोक्तुं न सहते। अस्य त्वयि अधिकारं ईर्ष्यामि।

**सुमित्रा**— राजन्! प्रिया इति तव हृदये मे स्थानम्। महिषी इति तव राज्यप्रपंचे।

**विक्रमः**— हंत। प्रिये कुत्र ते दिवसाः गताः यदा विषयांतरासंस्पृष्टं सुखं आवाभ्यां अनुभूतम्, एतत्प्रपंचः आवां न अजागरयत् आवयोः समागमस्य अरुणोदयेन आवयोः मौनं हृदयं उद्घाटितम्। तव नयनच्छिदौ तुषारावृतपुष्पदले इव ईषल्लज्तावृतौ स्तः। मंदवाताहतदीपशिखेव तव ओष्ठौ ईषत् स्मितकंपितौ स्तः। सति च प्रभाते प्राप्ते च निर्गमनसमये। कातरं आलिंगनं

अद्रुतविलंबितपदैः मत्तः आरात् गमनं च स्मरामि। तदा न गृहचिंता नापि गृहकार्यचिंता नच भवत्याः प्रपंचचिंता।

सुमित्रा— परंतु आवां बाला बालश्च आसाथाम्। इदानीं तु नृपः महिषी च।

विक्रमः— नृपः महिषी इति नाममात्रम्। ततोऽपि उन्नतः आवयोः संबंधः। आवां प्रियतमप्रियतमे।

सुमित्रा— त्वं मम नृपः मम भर्ता च। त्वत्पादानुसरणेन अहं तृप्ता। राज्यादपि गरीयस्तां मयि आरोप्य। मा मां लज्जय।

विक्रमः— किं मम प्रीतिं न इच्छसि?

सुमित्रा— सत्यं प्रीणय माम्। न तु विलासितया। सत्यं स्वाभाविकं भवितुं अर्हति।

विक्रमः— स्त्रियः हृदयं न अहं ज्ञातुं प्रभवामि।

सुमित्रा— राजन्! यदि तव सर्वस्वं मयि अपव्ययितं तर्हि अहं तेन वंचिता स्याम्।

विक्रमः— महिषि! मा तावत् व्यर्थालापं कुरु। पक्षिणां नीडानि प्रेम्णा मूकानि। ओष्ठौ ओष्ठाभ्यां मुद्र्यताम्। मा तत्र शद्धरवः भवतु।

(भृत्यः प्रविशति)

भृत्यः— राष्ट्रस्य विपत्कारिणं विषयं निरूपयितुं अमात्यः स्वामिनं द्रष्टुं अभिलषति।

**विक्रमः**— इदानीं न अवकाशः।

(भृत्यः निष्क्रमति)

**सुमित्रा**— देव! आह्वय अमात्यं आगंतुम्।

**विक्रमः**— राज्यं तत्कार्याणि विलंबं क्षमंते। सुखावसरस्तु क्वचिदेव लभते। कुसुमविकास इव क्षणभंगुरः अयम्। कर्तव्यात् विश्रमः अपि कर्तव्य एव।

**सुमित्रा**— देव! तव कर्तव्यं निर्वह इति याचे।

**विक्रमः**— निष्करुणा इयं महिला। किं तव अनभीष्टं अनुग्रहं बिंदुशः प्राप्तुं सदा त्वां अनुधावामि इति चिंतयसि किम्? त्वां विहाय गच्छामि (गच्छति)

(नृपस्य ब्राह्मणमित्रं देवदत्तः प्रविशति)

**सुमित्रा**— आर्य! द्वारस्य बहिः कः अयं कोलाहलः कथय।

**देवदत्तः**— सः कोलाहलः! आज्ञापय माम्। सैनिकानां सहायेन जर्जरं बुभुक्षितं तं उपमर्दयामि।

**सुमित्रा**— न अपहासय माम्। कथय किं वा संजातमिति।

**देवदत्तः**— न किंचित्। इयं केवलं दारिद्र्यपीडितानां बुभुक्षा। क्षुधापीडिताः ग्राम्याः चीत्कुर्वंति। नृपोद्याने निद्रासुखमनुभवतः कोकिलान् भयं उत्पाद्य जागरयंति।

सुमित्रा— तात! कथय के तावत् बुभुक्षापीडिताः इति।

देवदत्तः— अयं तेषां दैवदुर्विपाकः। निर्धनाः प्रजाः अर्धाहारेण जीवितुं कृताभ्यासाः। किंतु पूर्णोपवासकुशलता न अद्य यावत् साधिता इति चित्रमेतत्!

सुमित्रा— तात! भूमिः विकसितधान्या स्मयति। अतः कुतो वा प्रजानां बुभुक्षया मरणावसरः।

देवदत्तः— तस्य इयं धान्यराशिः यः भूमेः स्वामी। न अयं दरिद्राणां कृते अस्ति। ते तु नृपस्य भोजनसमारंभे अंतः प्रविशंतः श्वानः इव उच्छिष्टग्रासशकलेभ्यः पादयोः पतंति पादप्रहारं गृण्हंति।

सुमित्रा— किं नास्ति अत्रदेशे नृपः नाम।

देवदत्तः— न एक एव किंतु शतशः संति।

सुमित्रा— किं राज्याधिकारिणः न पश्यंति!

देवदत्तः— ते राज्याधिकारिणः कथं निंदार्हाः। ते विदेशतः निष्किंचनाः आगताः। किं ते शुष्कहस्तैः प्रजाः अनुगृहीतुं आगताः!

सुमित्रा— किं विदेशतः! किं ते मम बांधवाः।

देवदत्तः— अथ किम्।

सुमित्रा— जयसेनः किं करोति?

देवदत्तः— सः सिंहगडप्रदेशं अतिनिपुणतया पालयति यत् तस्मात् प्रदेशात् सर्वं अन्नं आच्छादनं च बहिः प्रेषितम्। केवलं प्रजानां अस्थीनि चर्माणि च अवशिष्टानि।

सुमित्रा— शीलः किं करिष्यति?

देवदत्तः— सः वाणिज्ये दत्तदृष्टिः। वणिजां लाभांशं सः अपहरति। स्वस्कन्धयोरेव लाभभारं वहति।

सुमित्रा— अजितः किं करिष्यति?

देवदत्तः— सः विजयकोटे वसति। स्मयन् आस्ते। स्वहस्तपरामर्शेन भूमिं खनति। यद्यत् स्पृशति तत् संगृण्हाति।

सुमित्रा— लज्जास्पदं इदं सर्वम्। मम पितुः राज्यात् आगतं इदं कालुष्यं मया निष्कासनीयम्। मम प्रजाः रक्षणीयाः। गच्छ तावत्। नृपः आगच्छति।

(नृपः प्रविशति)

राजन्! अहं प्रजानां माता। तेषां आक्रंदनं न सहे। रक्षय प्रजाः।

विक्रमः— मया किं कर्तव्यं इति अभिलषसि!

सुमित्रा— ये तव देशं पीडयंति तान् निष्कासय।

विक्रमः— के ते इति जानासि किम्?

सुमित्रा— जानामि।

विक्रमः— ते तवैव मातुलेयाः मातृष्वसेयाः पितृष्वसेयाश्च।

सुमित्रा— मम प्रजाभ्यः ते लेशतोऽपि न अधिकाः। तव सिंहासनच्छायायां प्रजाः पीडयंतः ते स्तेनाः।

विक्रमः— जयसेनः शीलः अजितः एव एते।

सुमित्रा— मम राष्ट्रात् ते निष्कासनीयाः।

विक्रमः— विना संरंभं न ते विर्गच्छंति।

सुमित्रा— देव! तर्हि युध्यस्व तैः।

विक्रमः— युध्यामि! प्रथमं तावत् त्वं जेतव्या। अनंतरमेव शत्रुभिः योद्धुं समयः स्यात्।

सुमित्रा— राजन्! तव महिषीं मां अनुजानीहि। अहमेव ते प्रजाः रक्षयामि। (निष्क्रमति)

विक्रमः— इत्थमेव त्वं मम चित्तं व्याकुलयसि। तव महिमाशिखरे त्वं एकाकिनी उपविशसि यत्र न अहं उपसर्पितुं शक्नोमि। त्वं तव देवतां सेवितुं व्रजसि। अहं तु त्वां लब्धुं विफलप्रयत्नं करोमि।

(देवदत्तः प्रविशति)

देवदत्तः— देव! कुत्र महिषी? किं एकाकी तिष्ठसि?

विक्रमः— ब्राह्मण! इदं सर्वं तव कुमंत्रणम्। महिष्या सह राज्यवार्तालापं कर्तुं त्वं इह आगच्छसि।

देवदत्तः— राज्यं स्ववार्तां महिषीकर्णपर्यंतं स्वयमेव आक्रोशति। तव विरामविघातं अनादृत्यैव आरटनदशां आपन्ना इयं लोकवार्ता।

राजन् मत्तः न भेतव्यम्। महिष्याः ब्रह्मदायं याचितुं अहं आगतः। यतः दीना इदानीं मे भार्या। शून्यं तस्याः भोजनागारम्। निराहाराणि गृहे अनेकानि उदराणि। (निष्क्रमति)

विक्रमः— सर्वथा प्रजानां हितं अभिलषामि। किमर्थं दुःखं अधर्मश्च प्रवर्तते ? किमर्थं बलिष्ठः निष्किंचनानां उपरि गृध्रदृष्टिं क्षिपति ?

(अमात्यः प्रविशति)

एतत्क्षणे एव विदेशात् आगताः दस्यवः मे राष्टात् निष्कास्यंताम्। पीडितानां प्रजानां आर्तनादं दिनमेकमपि न श्रोतुं इच्छामि।

अमात्यः— राजन्! बहोः कालात् वर्धितः दोषः न एकस्मिन् एव दिने उन्मूलयितुं शक्यते।

विक्रमः— हठात् मूलं एव जहि। एकस्मिन् एव दिने तव कुठारेण शतसंवत्सरं वर्धितं वृक्षं पातय।

अमात्यः— शस्त्राणि सैनिकाश्च अपेक्ष्यंते।

विक्रमः— कुत्र मे सेनाधिपतिः!

अमात्यः— सः एव अन्यदेशीयः।

विक्रमः— तर्हि आहूयंतां मे प्रजाः। उद्घाटच्यतां कोशः। आहारदानेन आर्तनादः अयं समाप्यताम्। धनं दत्वा जनान् प्रेषय। यदि ते मे राज्यं इच्छंति शांत्या ते अधिगच्छंतु, सुखिनश्च भवंतु। (निष्क्रमति)

(सुमित्रा देवदत्तश्च प्रविशतः)

अमात्यः— देवि! सप्रश्रयं प्रणमामि।

महिषी— अस्माकं राष्ट्रे अप्रतिबंधं प्रजानां दुर्दशायाः अनुवृत्तिं न अनुमोदितुं शक्नुमः।

अमात्यः— देवि! का ते आज्ञा?

महिषी— मदाज्ञया सर्वान् विदेशीयान् मंडलप्रमुखान् आह्वय।

अमात्यः— इतःपूर्वमेव एतदनुष्ठितम्। नृपस्य अनुज्ञां विनैव तदाज्ञा इति सर्वे मंडलप्रमुखाः राजधानीं आहूताः नृपस्य अनुज्ञा तु निरासभयेन न प्रार्थिता।

महिषी— तव संदेशवहाः कदा प्रेषिताः?

अमात्यः— किंचिदूनः मासः स्यात्। प्रतिक्षणं तेषां उत्तरं निरीक्ष्यते। ते न उत्तरयेयुः इति शंके।

महिषी— किं राजाज्ञां न अनुमन्यंते!

देवदत्तः— नृपः इदानीं उच्छ्रृंखलकिंवदंतीविषयः। किंवदंतीः एताः जनाः कदाचित् विश्वस्युः कदाचित् न विश्वस्युः।

महिषी— अमात्य! ऐतेभ्यः सैनिकान् सज्जीकुरु। मदीयबांधवाः ते मह्यं उत्तरदायिनः।

(अमात्यः निष्क्रमति)

देवदत्तः— देवि! ते न आगच्छेयुः।

महिषी— तर्हि नृपः तैः युध्यति।

देवदत्तः— नृपः न युध्यति।

महिषी— तदा अहं युध्यामि।

देवदत्तः— किं भवती युध्यति?

महिषी— मम भ्रातरं काश्मीरनृपं उपसर्पामि। तस्य सहायेन काश्मीरदेशकलंकभूतान् एतान् राजद्रोहिणः युध्यामि। तात! राज्यात् निर्गंतुं मे सहायं आचर। यदि परमापदेव आपतति तर्हि त्वदीयं कर्तव्यं निर्वह।

देवदत्तः— प्रजानां मातरं त्वां प्रणमामि। (निष्क्रमति)

विक्रमः— देवि! किमर्थं त्वं दूरं यासि। मम क्षुधितः अभिलाषः नग्नतया प्रकाशितः। किं एतास्मात् कारणात् त्वं मां धिक्कृत्य दूरं यासि!

सुमित्रा— एकाकिनी तव हृदयं संविभक्तुं लज्जे। सर्वाभ्यः प्रजाभ्यः ते हृदयम्।

विक्रमः— देवि! किमिदं यथार्थं यत् त्वं शिरोभ्रमणकारिणं उन्नतं स्थानं अधितिष्ठसि, अहं तु धूलौ निपतितः इति।
नहि नहि अहं मम सामर्थ्यं जानामि। अस्ति मे स्वभावे अपरा जीयमानं बलम्। इदं त्वयि प्रेमतया परिणामितम्।

सुमित्रा— राजन्! द्विष मां द्विष। विस्मर माम्। धैर्येण अहं एतत् सहे। परंतु स्त्रियः कस्याचन सौंदर्याय ते पौरुषं मा विनाशय।

विक्रमः— तादृशं प्रेम, ईदृशं औदासीन्यम्। इयं ते उदासीनता निर्घृणा क्षुरिका इव मे हृदयं छिनत्ति। उष्णं रुधिरं निष्कास्य धूलौ प्रसिंचति।

सुमित्रा— प्रियतम! आत्मानं तव पादयोः क्षिपामि। किं तव महिषी पौनःपुन्येन प्रमादाय न क्षांता। तर्हि किमर्थं अयं कोपसंरंभः यदा अहं प्रमादरहिता?

नृपः— प्रिये उत्तिष्ठ। मे हृदयांतिकं आयाहि। क्षणं मम आत्मानं सर्वतः पिधेहि। तव बाहुपाशेन परिधीकृते तवैव प्रपंचचक्रव्यूहे मां बधान। (बहिः कस्यचन ध्वनिः) देवि!

सुमित्रा— देवदत्तस्य ध्वनिः। तात! कीदृशः संदेशः?

(देवदत्तः प्रविशति)

देवदत्तः— नृपस्य आज्ञा तैः तिरस्कृता। ते अन्यदेशात् आगताः मंडलाधिकारिणः। तैः राज्यक्रांतये सज्जीकृतम्।

सुमित्रा— राजन्! किं श्रुतम्!

विक्रमः— ब्राह्मण! राजप्रासादोद्यानं न राजसभा।

देवदत्तः— राजसभायां राजानं क्वचिदेव पश्यामः। यतः न राजसभा प्रासादोद्यानम्।

महिषी— पापिनः एते श्वानः राज्ञः आसंदिका निर्मलीकरणेन संवृद्धाः स्वामिनं विरोद्धुं स्वप्नान् पश्यंति। राजन्! न एषः राजसभायां विवदितुं कालः। कार्यपंथाः सुस्पष्टः। सैनिकैः सह गत्वा मारय एतान्।

विक्रमः— अस्माकं सेनाधिपतिरेव अन्यदेशात् आगतः।

महिषी— स्वयमेव गच्छ।

विक्रमः— देवि! अहं ते दैवदुर्विपाकः, दुःस्वप्नः, तव शरीरे कंटकप्रायः! न अहं इतः पदमपि गच्छामि। तैः सह शांतिसंधानं करोमि। अस्य कुचेष्टितस्य को वा कारणम्। सः ब्राह्मणः सा महिला च बिलात् सर्पस्य बहिरागमनाय कुतंत्रं व्यरचयतः। ये आत्मरक्षणे असमर्थाः ते अविचारितया परेषां आपदं उत्पादयंति।

महिषी— हंत! दुरदृष्टं इदं राष्ट्रम्। दुरदृष्टा च सा स्त्रीः या अस्य राष्ट्रस्य महिषी।

विक्रमः— कुत्र त्वं प्रयासि?

महिषी— त्वां परित्यजामि।

विक्रमः— मां परित्यजसि!

महिषी— अथ किम्। राजद्रोहिणः युध्यामि।

विक्रमः— किं मां अपहससि!

महिषी— मम पथि शुभं अहमेव आशासे।

नृपः— न मां परित्यक्तुं धृष्टा भव।

महिषी— त्वां दुर्बलयितुं तव समीपे स्थातुं धृष्टा न भवामि।

नृपः— गर्वभराक्रांते! गच्छ। पुनरागमनाय न त्वां आह्वयामि। मम सहायं तु मा याचस्व।

(महिषी निष्क्रमति)

देवदत्तः— देव! एकाकिन्याः तस्याः गंतुं अवसरं देहि।

नृपः— न सा गमिष्यति। तस्याः वाचं न अहं विश्वसिमि।

देवदत्तः— सा स्वोद्देशतत्परा इति मन्ये।

नृपः— इदं स्त्रीछलम्। मां उद्योगे प्रचोदयितुं सा मां तर्जयति। अहंतु

तस्याः सरणिं अवधीरयामि। तस्यां मम प्रेम्णा न सा दीव्यतु। सा परितपेत्।

मित्र! नृपेण प्रेमनिगडेन पतनीयं इति पाठः किं मया तस्याः स्त्रियः स्वीकरणीयः यां मम प्रलयमिव स्निह्यामि?

देवदत्त! त्वं शैशवात् मया सह वर्धितः। किं त्वं 'अहं नृपः' इति विस्मृत्य ममापि वेदनास्पंदि मनुष्यहृदयं वर्तते इति मन्यसे।

देवदत्तः— मित्र! मम हृदयं त्वदीयमेव। तव प्रेम इव तव क्रोधमपि स्वीकर्तुं सज्जम्।

नृपः— मम हृदयगतं सर्पं किं आह्वयसि?

देवदत्तः— तव गृहं अग्निसात् जातम्। मया तु केवलं सा वार्ता निरूपिता। त्वं च जागरितः तन्मात्रेण किं अहं अवज्ञार्हः।

नृपः— सर्वं इदं स्वप्नजगत्। अतः किं जागरणेन। अहं मम लघु-स्वप्नमेव अनुभवितुं इच्छामि। ततः मृत्युं अनुगच्छामि। पंचाशत् संवत्सरानंतरं अस्य क्षणस्य सुखं दुःखं वा कः स्मरति? गच्छ देवदत्त। नृपस्य एकाकितावेदनां अनुभवितुं परित्यज माम्।

(विदेशीयः राजसभासदः प्रविशति)

राजसभासदः— राजन्! महिष्या सह विदेशात् आगताः वयं भवतः न्यायमपेक्षामहे।

नृपः— न्यायः! कुत्र विषये!

राजसभासदः— अस्मासु मिथ्यारोपाः भवते निरूपिताः इति अस्माभिः श्रुतम्। वयं विदेशीयाः इति एतावन्मात्रमेव अत्र निदानम्।

नृपः— एते आरोपाः मिथ्याभूताः इति कः जानाति! परंतु यावत् अहं भवतः विश्वसिमि किं तावत् तूष्णीं स्थातुं न शक्नु वंति भवंतः! किं मया कदापि यूयं ईषदपि अविश्वासेन अवमानिताः। अविश्वासः कापुरुषाणां पूतिगंधदूषितहृदयेषु एव कीटा इव पदं लभते। राजद्रोहात् अहं न भीतः। पदतलाघातेन तं निष्पेषयामि। किंतु मम हृदये क्षुद्रताभावं पोषयितुं बिभेमि। त्वं इदानीं गंतुं अर्हसि।

(अमात्यः देवदत्तश्च प्रविशतः)

अमात्यः— देव! महिषी अश्वं आरुह्य प्रासादात् निर्गता।

नृपः— किं भणसि, मम प्रासादात् निर्गता!

अमात्यः— अथ किम्।

नृपः— किं त्वया सा न निरोधिता?

अमात्यः— गुप्तमेव तया निर्गतम्।

नृपः— केन इयं वार्ता आहृता?

अमात्यः— पुरोहितेन। प्रासादगतदेवमंदिरस्य पुरतः अश्वं आरोहयंती सा तेन दृष्टा।

नृपः— पुरोहितं आनय।

अमात्यः— देव न सा दूरं गता स्यात्। इदानीं एव सा निर्गता। भवानेव तां प्रत्यानेतुं प्रभवसि।

नृपः— तस्याः प्रत्यानयनं न महत्तरम्। किंतु तया अहं परित्यक्ता अहं परित्यक्ता इति तु महती घटना। नृपस्य सर्वे सैनिकाः दुर्गाणि कारागृहाणि आयसशृंखलाः अस्याः स्त्रियः लघु हृदयं बद्धुं असमर्थाः आसन्।

अमात्यः— राजन्! मिथ्यारोपः भग्ने सेतौ प्रवाहोत्पीडः इव सर्वतः सहसा प्रसरति।

नृपः— मिथ्यारोपः! जनानां जिह्वाः तैरेव उत्पादितेन विषेण पूतिगंधिनः भवंतु।

देवदत्तः— ग्रहणकाले जनाः मध्यान्हसूर्यं कज्जलाक्त काचशकलद्वारा धृष्टाः पश्यंति।

राज्ञि! तव नाम कलुषितं स्यात् मुखात् मुखं लुठितं स्यात्। किंतु तव प्रकाशः कालुष्यं अतिक्रम्य प्रकाशते।

नृपः— पुरोहितं आनय (अमात्यः गच्छति) तां अन्वेष्टुं अहं गंतुं शक्नोमि। तां आनेतुं च शक्नोमि। किंतु किं इदं मम अनवरतं कर्तव्यम्! किं तया अहं अनवरतं परिहर्तव्यः मया तु तस्याः पलायमानं हृदयं अनुधावनीयम्? महिले! दिवारात्रिं धावय। गृहं

विना प्रेमं विना विश्रमं शांतिं च विना धावय

(पुरोहितः प्रविशति)

गच्छ, गच्छ बहु श्रुतं मया।
न अतः परं श्रोतुं अभिलषामि।

(पुरोहितः गंतुं उपक्रमति)

आगच्छ। किं सा अश्रुपूर्णाक्षिभ्यां देवं प्रार्थयितुं मंदिरं आगता आसीत्?

पुरोहितः— देव! न तथा! तया क्षणं अश्वः परीक्षितः। शिरः नम्रयित्वा देवमंदिरं प्रति मुखं परिवर्तितम्। विद्युत्प्रकाशवेगेन मार्गः अनुसृतः। तस्याः नेत्रयोः अश्रूणि आगतानि न वा इति न अहं वक्तुं प्रभवामि। तदा मंदिरात् दीपप्रकाशः मंदः आसीत्।

नृपः— तस्याः नेत्रयोः अश्रूणि!
न तस्यां ईदृशी घोरता विभावयितुं अपि शकयते। गच्छ त्वम्।

(पुरोहितः गच्छति)

भगवन्! मया तस्यां प्रेम कृतं इति एतावान् एव मे अपराधः इति त्वं जानासि एव। तस्याः प्रेम्णः कृते स्वर्गं राज्यं च हातुं अहं सन्नद्धः। न हि एभिः अहं अभिदुग्धः किंतु तया एव अभिदुग्धः।

(अमात्यः प्रविशति)

अमात्यः— देव! तां अन्वेष्टुं अश्वारोहिणः दूताः प्रेषिताः।

नृपः— ते प्रतिनिवर्त्यताम्। स्वप्नः निर्गतः। तव दूताः कुत्र एतं अन्वेषयेयुः ? सेनां सज्जीकुरु। अहं स्वयमेव युद्धाय अवतरामि। राजद्रोहिणः निष्पेषयामि।

अमात्यः— यथा आज्ञापयति देवः।

विक्रमः— देवदत्त! किं त्वं दुःखितः तूष्णीं तिष्ठसि। लोष्टं उत्सृज्य स्तेनः पलायितः। अहं इदानीं स्वतंत्रः। एषः मे हर्षावसरः। मित्र! मम वचनानि मिथ्या, मिथ्या, मिथ्या। निर्घृणा वेदना मम हृदयं छिद्रीकरोति।

देवदत्तः— इतःपरं तव वेदनायाः प्रेम्णः वा न अवसरः। तव जीवनं उद्दिष्टकार्योन्मुखः प्रवाहः स्यात्। तव क्षात्रहृदयं विजयोन्मुखं विधेहि।

विक्रमः— अहं न अद्य यावत् मम हृदये स्वतंत्रः। सा पुनः मां आयाति इति विश्वसिमि। यदा सा अवगच्छति यत् 'न जगत् सर्वं तस्यां प्रीणाति किंतु मानवहृदयजगदेव तस्यां प्रीणाति' इति 'यत् तया प्रत्यादिष्टं तेन प्रच्याविता' इति तदा मां आयाति। यदा तस्याः गर्वः परिच्युतः भवति, यदा ईर्ष्या याचते तदा मे अवसरः प्राप्नोति, तदा सा मां आयाति।

(भृत्यः प्रविशति)

भृत्यः— महिष्याः पत्रम् (पत्रं दत्वा गच्छति)

नृपः— तया काठिण्यं मुक्तमेव (पत्रं वाचयति)। किं एतावन्मात्रम् ?

वाक्यद्वयमेव। मम राज्ये राजद्रोहिणः क्रांतिं शमयितुं काश्मीरस्थ स्वभ्रातुः सहायं अधिगंतुं यामि इति। काश्मीरदेशात् सहायः इति नूनं मम अवज्ञा।

देवदत्तः— तस्याः साहसं मोघीकर्तुं न विलंब्यताम्। अयं च ते प्रतीकारः भवतु।

नृपः— मया प्रतीकारः। ज्ञास्यसि त्वम्।

प्रथमः अंकः समाप्तः

## द्वितीयः अंकः

(काश्मीरदेशे वस्त्रपटलमंटपः)

सेनाधिपतिः— राजन् तव राज्यस्य हिताय मया क्रियमाणाय उपदेशाय मां क्षमस्व।

विक्रमः— उच्यताम्।

सेनाधिपतिः— अस्माकं राज्ये राजद्रोहिणां क्रांतिः प्रशमिता। राजद्रोहिणः तव पक्षं आगत्य युध्यंति। तव राज्ये तव सन्निधानं अवश्यं अपेक्षितम्। अतः काश्मीरदेशे अस्माकं बलस्य कालस्य वा अपव्ययेन किं प्रयोजनम्?

विक्रमः— अत्र संग्रामः न अद्य यावत् परिसमाप्तः।

सेनाधिपतिः— कुमारसेनः तस्य भगिन्याः अविमृश्यकारित्वाय

दंडितः एव। तस्य सेना उपाटिता। तस्य पितृव्यः चंद्रसेनः विविक्ते तस्य सिंहासने उपवेष्टुं आतुरः। तं राजानं कृत्वा दुर्विपाकग्रस्तं इमं देशं शांत्यै त्यज।

विक्रमः— दंडनाय न अहं अत्र देशे तिष्ठामि। किंतु संग्रामाय। संग्रामः अयं चित्रकारस्य चित्रमिव संजातः। मया रेखाः स्फुटं उट्टंकनीयाः। वर्णाः दृढं संयोजनीयाः। प्रत्यहं चित्रं इदं परिष्करणीयम्। यथा यथा चित्रं इदं विकसितं भवति तथा तथा मम मनः अत्र तल्लीनं भवति। समाप्ते चित्रे उच्छ्वसिमि। अस्य साधनानां उच्छेदः भवति। चित्रं तु आकारं भजते। इयं सा सृष्टिः। पलाशकुसुमगुच्छं इव सुंदरं इदम्। पलाशकुसुमगुच्छं पानमत्तस्य संरंभेण विकसति। तथापि अस्य कुसुमानि कोमलानि एव।

सेनाधिपतिः— देव! निरवधिकतया एतत् कर्तुं न शकयते। संति ते कार्यांतराणि। 'अनेन युद्धेन तव राज्यं विनाशपथं याति इति त्वां बोधयितुं' अमात्यः असकृत् मे संदेशं प्रेषयति।

विक्रमः— मम प्रबलहस्तयोः यद् वर्धते तद्विहाय न अहं अन्यद् द्रष्टुं प्रभवामि।

हंत! खड्गानां गीतम्। ते महासंग्रामाः ये प्रेमालिंगनं इव वक्षः बध्नंति।

सेनाधिपते! गच्छ। संति ते कार्यांतराणि। तव खड्गस्य उपरि तव उपदेशाः प्रकाशयंतु।

(सेनाधिपतिः निष्क्रमति)

अयं निर्मोक्षः। बंधितं मुकवा बंधनं स्वयमेव शिथिलीकृतम्। प्रेम्णः कृशासवापेक्षया प्रतीकारः बलवत्तरः। प्रतीकारः बंधनमोक्षः। माधुर्योद्विजनवेष्टनात् मोक्षः।

(सेनाधिपतिः प्रविशति)

सेनाधिपतिः— अस्माकं वस्त्रपटलमंदिरं प्रति आयांतं वाहनं एकं दूरतः पश्यामि। प्रायेण शांतिदूतः आयाति। अस्य रक्षकाः सैनिकाः न संति।

नृपः— शांतिः संग्रामं अनुवर्तनीया। किंतु तस्याः अवसरः न अद्य यावत् प्राप्तः।

सेनाधिपतिः— संदेशहरस्य संदेशं तावत् प्रथमं शृणुमः। ततः

नृपः— ततः संग्रामं अनुवर्तयामः।

(कश्चित् सैनिकः प्रविशति)

सैनिकः— महिषी तव दर्शनं अपेक्षते।

विक्रमः— किं वदसि।

सैनिकः— महिषी आगता।

विक्रमः— का महिषी?

सैनिकः— अस्माकं राज्ञी सुमित्रा।

विक्रमः— सेनाधिपते! पश्य का आगता।

(सेनाधिपतिः सैनिकश्च गच्छतः)

नृपः— काशमीरदेशे मम संग्रामारंभानगंतरं तृतीयवारं मां चाटूक्त्या सांत्वयितुं निष्कलं एषा आगता। परंतु न एते स्वप्नाःएते संग्रामाः यत्र अकांडे उत्थाय तानेव प्रासादोद्यानान्, पुष्पाणि, महिषीम्, निश्वासभरान् दीर्घदीर्घान् दिवसान् क्षुद्रानुग्रहान् च लब्धुम्। सहस्रधा न इति ब्रवीमि। मां बंदीकर्तुं सा आगता। संग्रामभूमेः तस्याः प्रासादं प्रति मां जय बहुमानमिव नेतुं आगता। अशनिवर्षं बंदीकर्तुं अपि एषा यतेत।

(सेनाधिपतिः प्रविशति)

सेनाधिपतिः— देव! एषा अस्माकं राज्ञी भवंतमेव द्रष्टुं आगता। यथेच्छं तव अंतिकं आगंतुं अनुमंतुं न प्रभवामि इति विशीर्णं मे हृदयम्।

नृपः— स्त्रियं द्रष्टुं न अयं उचितः देशः नापि अयं उचितः कालः।

सेनाधिपतिः— किंतु राजन्!

नृपः— मंम वस्त्रपटलमंदिरद्वारे भद्रं रक्षा करणीया इति रक्षकान् आदेशय। न शत्रुप्रतिबंधाय किंतु स्त्रीणां प्रतिबंधाय।

(शंकरः प्रविशति)

शंकरः— अहं कुमारसेनस्य भृत्यः शंकरः। तव वस्त्रपटलमंदिरे अहं बंदीकृतः।

नृपः— अथ किं अहं जानामि!

शंकरः— तव महिषी बहिः अवसरं प्रतीक्षते।

नृपः— तया इतोऽपि दूरतः एव स्थातव्यम्।

शंकरः— त्वत्तः क्षमां याचितुं सा आगता। यदि न एतत् शंक्यं तदा भवतः हस्तात् दंडं अनुभवितुं आगता तयैव अपराद्धं इति सा अंगीकरोति। सकलपवित्रवस्तूनि पणीकृत्य तस्यः भ्रातुः राज्यं च मोचयितुं त्वां प्रार्थयते।

नृपः— वृद्धपुरुष! अयं संग्रामः इति जानातु भवान्। अयं संग्रामः तस्याः भ्रात्रा सह नतु तया सह। संग्रामः अयं युक्तः अयुक्तः वा इति स्त्रिया सह विवदितुं न मे कालावकाशः।

स्वयं पुरुषः सन् त्वं जानाति खलु यत् 'युक्तं अयुक्तं वा एकदा संग्रामे प्रारब्धे सः पर्यंततां नेतव्यः इति इदं पुरुषकारलक्षणम्' इति।

शंकरः— देव! किं जानाति भवान् यत् 'अयं संग्रामः स्त्रिया सह प्रवर्तते, सा च स्त्रीः भवतः महिषी' इति। अस्माकं राजा तु तस्याः भ्राता इति तस्याः कार्यं उररीकरोति।

किं इदं क्षत्रियोचितं पुरुषकारोचितं वा यत् 'गृहकलहः अयं संग्रामे परिणमय्य देशात् देशं नीयते' इति।

नृपः— वृद्धपुरुष! अनुशास्मि त्वां यत् 'तव जिह्वा विपत्कारिणी जाता' इति

अस्मदाज्ञया महिषीं ब्रूहि यत् 'यदा तस्याः भ्राता कुमारसेनः पराजयं अंगीकरोति, शरणागतश्च भवति तदा एव क्षमादानं प्रस्तूयते' इति।

शंकरः— इदं अशक्यम्। प्रभातसूर्यकिरणैः पश्चिमदिशाधूलिस्पर्श इव असंभावितम्। यावज्जीवं न मे राजा ते शरणं गतः भविष्यति। तस्य भगिनी न कदापि एतां दशां अनुभवितुं अभिलषति।

नृपः— तर्हि संग्रामः अनुवर्तनीयः एव। त्वं न जानासि किं यत् 'पराक्रमः कतिचिदवधिकः ततः परं प्रमत्तवीरताव्यामोहः' इति। तव राजा विमोचयितुं शक्नोति। मया सः सर्वतः समाक्रांतः। इदं च सः जानाति।

शंकरः— अथ किम्। सः जानाति। तत्र महत् छिद्रं वर्तते इत्यपि जानाति।

नृपः— कः ते आशयः?

शंकरः— मरणं इति मे आशयः। अनेन विजयद्वारेण सः त्वत्तः विमुक्तः भवति। तस्य हृदयं अहं जानामि। प्रतीकारः तत्र तिष्ठति।

(शंकरः व्रजति)

(भृत्यः प्रविशति)

भृत्यः— देव! कुमारसेनस्य पितृव्यः चंद्रसेनः तस्य भार्या रेवती च भवंतं द्रष्टुं आगतौ।

नृपः— प्रवेशय तौ।

(चंद्रसेनः रेवती च प्रविशतः)

नृपः— युवयोः प्रणमामि।

चन्द्रसेनः— दीर्घायुष्मान् भव।

रेवती— विजयी भव।

चन्द्रसेनः— कः दंडः तस्मै प्रकल्पितः?

नृपः— यदि सः शरणं आयाति तर्हि क्षम्यते।

रेवती— एतावन्मात्रमेव। न किंचित् अधिकम्। यदि संग्रामांते दुर्बला क्षमा स्यात् तर्हि किं एतावता संभारेण?

राजानः न अतिवयसः बालाः। न वा संग्रामः बालक्रीडा।

विक्रमः— बलात्कारेण राज्यापहरणं न मे उद्दिष्टम्। मम गौरवरक्षणमेव अभिप्रेतम्। किरीटधारि शिरः न अवज्ञां सहते।

चन्द्रसेनः— वत्स! क्षमस्व तम्। न सः वयसि परिणतः नापि विवेके। तंस्य सिंहासनाधिकारं अपहरतु भवान्। स्वदेशात् निष्कासतु वा। किंतु तस्य प्राणाः रक्षणीयाः।

नृपः— न तस्य प्राणान् अपहर्तुं इच्छामि।

रेवती— तर्हि किमर्थं इयं महती सेना। शस्त्राणि च। निरपराधिनः

सैनिकान् घातयसि। अपराधिनं च मुंचसि।

विक्रमः— तव आशयं न जानामि।

चन्द्रसेनः— न किंचित्। कुमारसेनेन अस्माकं राष्ट्रं एतां दशां प्रापितम्। समीपबंधुः भवान् उद्वेजितः इति तस्मै एषा क्रुद्धा।

विक्रमः— बंदीकृते तस्मिन् न्यायमेव आचरामि।

रेवती— सः अस्माभिः गूहितः इति शंकां अपनेतुं अहं इह आगता। सः प्रजाभिः गूहितः। तेषां क्षेत्रसस्यानि ग्रामान् च भस्मसात् कुरु। तान् बुभुक्षादग्धान् कुरु। तदानीं एव ते तं बहिः आनयेयुः।

चन्द्रसेनः— शनैः, पत्नि! शनैः। वत्स! राजप्रासादं उपतिष्ठ। काश्मीरराष्ट्रं ते स्वागतं आशंसितुं प्रतीक्षते।

नृपः— युवां तत्र गच्छथः। अहं अन्वागच्छामि।

(तौ निष्क्रमतः)

हंत! नरकाग्नेः रक्तज्वाला। स्त्रीहृदयस्य लोभः द्वेषश्च। किं तस्याः मुखे मम मुखस्यैव किंचित् छटा मया दृष्टा? चकितः अस्मि। मम भाले अपि तादृशाः रेखाः या हृदयगूढस्य अग्नेः दाहेन अंकिताः पंथानः इव संति।

किं मम ओष्ठौ अपि तस्याः इव घातुकक्षुरिकायाः प्रांते इव निशितौ वक्रौ च जातौ। नहि, नहि।

संग्रामे एव मे रागः न राज्यलोभः न वा निर्घृणता। अस्य ज्वाला प्रेमज्वाला इव न नियंत्रितुं शक्या। न तस्य व्ययचिंता। एषः संग्रामरागः आत्मानं एव भस्मसात् कुरुते। अन्यत् सर्वं च यद्यत् स्पृशति तत् ज्वलति भस्मीभवति वा।

(भृत्यः प्रविशति)

भृत्यः— ब्राह्मणः देवदत्तः उपस्थितः। भवतः दर्शनानुकूलतां अपेक्षते।

नृपः— किं देवदत्तः आगतः। प्रवेशय तम्। नहि, नहि। तिष्ठ तावत्। चिंतयामि तावत्। तं अहं जानामि। सः इदानीं संग्रामभूमेः मा परावर्तयितुं आगतः।

ब्राह्मण! त्वया नदीकूलानि उत्खातितानि। इदानीं प्रवाहः उत्प्लवति। तव क्षेत्राणि आपूर्य शनैः विरमतु इति ते मनीषा। किं अयं प्रवाहः तव गृहाणि न मज्जयति! राष्ट्रं च न विनाशयति! दारुणकर्मणः हर्षः अंधः, क्षणभंगुरश्च। मत्तगजेन सरसः पंकजोत्पाटनमिव कातरतया शीघ्रमेव अनेन अपहृतं संग्रहणीयम्। पराक्रमे परिसमाप्ते हितोपदेशः स्वयमेव अवतरति। नहि, ब्राह्मणं न पश्यामि।

(त्रिशुरपर्वतस्य मंडलाधिपतिः अमरुः प्रविशति।)

अमरुः— देव! भवतः आदेशानुसारेण अहं उपस्थितः। भवान् मम राजा।

नृपः— किं त्वं अस्य स्थानस्य मंडलाधिपतिः ?

अमरुः— अथ किम्। अहं त्रिशुरस्य मंडलाधिपतिः भवान् अनेकेषां नृपाणां नृपः। अहं तव भृत्यः। मम इलानाम्नी तनया वर्तते। सा युवतिः सुंदरी च। सा भवतः भार्या भवितुं अर्हति इत्युक्ते न मां विफलभाषिणं अवगच्छ। सा द्वारि तिष्ठति।

राजन्! अनुजानीहि माम्। अस्य पुष्पप्रचुरदेशस्य अभिनंदनमिति तां उपहरामि। (अमरुः निष्क्रमति) (इला भृत्येन सह प्रविशति)

नृपः— हंत! एषा सा आगता। मुहूर्तात् पूर्वं कालरात्रिः आसीदिव। आश्चार्यावहा इयं प्रभातकन्या आगता।

एहि सुंदरि! संग्रामभूमिं विस्मारयसि। संग्रामदेवतायाः हृदयं छेत्तुं काश्मीरराष्ट्रेण श्रेष्ठतमः बाणः निस्सृतः।

पदार्थकानने पर्यटतोः मम नेत्रयोः सार्थक्यं त्वया संपादितम्। किमर्थं त्वं भूमौ अक्षिणी निक्षित्य तूष्णीं तिष्ठसि? तव अंगेषु भयकंपं पश्यामि। अतिशयितां आपन्नं इदं अदृश्यमिव भवति।

इला— (जानुभ्यां उपविश्य) भवान् राजसत्तमः इति मया श्रुतम्। मम प्रार्थनां अनुमन्यस्व।

नृपः— उत्तिष्ठ सुंदरि! भूमिः एषा तव पादस्पर्शं न अर्हति। धूलौ किं जानुनी प्रसरसि? तव अदेयं न किमपि वर्तते।

इला— मम पित्रा अहं तुभ्यं प्रदत्ता। तव हस्तात् आत्मानं विमोचयितुं अभिलषामि। भवतः अतुला संपत् वर्तते। अनवधिका पृथ्वी च। मां धूलौ एव त्यज। तव अपेक्षितं न किंचित् अवशिष्यते।

नृपः— किं मया अपेक्षितव्यं किमपि नास्ति?

मे हृदयं कथं ते दर्शयामि! कुत्र सा अतुला संपत्! कुत्र च सा निरवधिका पृथ्वी! शून्यं मे हृदयम्। यदि राज्यं मे न स्यात्, त्वां एव प्राप्तः स्याम्!

इला— तर्हि अरण्यमृगस्य वक्षसि बाणान् निक्षिप्य प्राणान् अपहरन् इव मम प्राणान् तावत् प्रथमं अपहर।

नृपः— बाले! किमर्थं मयि एतादृशी अवधीरणा बाहुबलेन मया राज्यं जितम्! किं तव हृदयं भिक्षयितुं न प्रभवामि?

इला— किंतु मम हृदयं न मम अधीनम्। मया इदं तस्मै प्रदत्तं यः मासेभ्यः पूर्वं 'अहं पुनः आगमिष्यामि, आसु एव पुराणवृक्षच्छायासु पुनः संमिलामि' इति प्रतिज्ञाय मां विहाय गतः।

विक्रमः— धन्यः सः पुरुषः। बाले! देवाः अस्माकं प्रेम ईर्ष्यंति। मदीयमेव रहस्यं शृणु। मया निखिलं जगत् तिरस्कृतं, प्रेम अनुसृतम्। अहं स्वप्नात् जागृतः। जगत् यथावत् आसीत्। मम प्रेम तु बुद्बुदवत् भिन्नम्।

किं तस्य नाम यं त्वं प्रतीक्षसे।?

इला— सः काश्मीरनृपः। कुमारसेन इति तस्य नाम।

विक्रमः— किं कुमारसेनः!

इला— किं त्वं जानासि तम्! सः सर्वविदितः. काश्मीरराष्ट्रस्य हृदयमेव तस्मै समर्पितम्।

विक्रमः— काश्मीरनृपः कुमारसेनः!

इला— अथं किम् सः तव मित्रं स्यात्?

विक्रमः— तस्य अदृष्टसूर्यः अस्तंगतः इति त्वं न जानासि किम्? तस्य आशां त्यज। सः मृगयायां लक्षीकृतः मृगः इव प्रच्छन्नः गुहातः गुहां चरति। एतासु पर्वतश्रेणिषु संचरन् अतिदरिद्रः भिक्षुकः अपि तदपेक्षया सुखी।

इला— राजन्! न अहं तव आशयं जानामि।

विक्रमः— स्त्रियः यूयं युष्माकं विविक्ते हृदये अवस्थाय प्रेम कुरुतः। जगतः प्रवाहः कथं अट्टहासं कुर्वन् प्रवहति, कथं वा पुरुषाः वयं अस्य तरंगैः सर्वासु दिक्षु नीताः इति न यूयं जानीथ। केवलं युष्माकं बाष्पपूर्णैः विशालैः अक्षिभिः अस्थिराशावलंबनेन प्रतीक्षंत्यः तिष्ठथ। वत्से! नैराश्यं अनुभवितुं सन्नद्धा भव।

इला— राजन्! सत्यं ब्रूहि। मा मां वञ्चय। अहं अतीव अल्पा। किंतु अहं सर्वथा तस्यैव। कुत्र कानने मे प्रियतमः पर्यटति? अहं न कदापि गृहात् बहिः गता। तथापि तं अन्वेष्टुं गच्छामि। दर्शय पंथानम्।

विक्रमः— तस्य शत्रोः सैनिकाः तं अनुवर्तंति। सः विनष्टप्राय एव।

इला— किं त्वं न तस्य मित्रम्? किं त्वं तं न रक्षयसि? यदा कश्चित्त् नृपः आपद्ग्रस्तः किं नृपः सन् त्वं केवलं तत् पश्यन् वर्तसे? तं रक्षितुं किं त्वं न प्रतिजानासि? सर्वे प्रजाः तस्मिन् स्निह्यंति इति अहं जानामि। किंतु तस्य आपदि कुत्र ते तिष्ठंति!

देव! भवान् महत्पराक्रमशाली। किंतु यदि अन्यं महांतं पुरुषं न रक्षसि किं ते पराक्रमेण। किं भवान् पृथक् स्थातुं अर्हसि! दर्शय मे पंथानम्। अबलापि अहं तदर्थं आत्मानमेव समर्पयामि।

विक्रमः— तस्मिन् प्रेम कुरु, तव सर्वस्वेन तस्मिन् प्रेम कुरु। सः तव हृदयस्य राजा। मम प्रेम्णः स्वर्गः मया प्रच्युतः। त्वां सुखिनीं कृत्वा सुखीभवितुं इच्छामि।

न अहं तव प्रेम्णे प्रयते। शुष्का वृक्षशाखा आरोपितपुष्पैः पुष्पिता न स्यात्। मां विश्वसिहि। अहं तव मित्रम्। अहं तं आनयामि।

इला— उदात्त राजन्! मम प्राणाः सुखस्वर्ग च भवतः एव प्राप्ताः

विक्रमः— गच्छ! वधूवेषेण अलंकृता भव। अहं मम जीतं परिवर्तयामि।

(इला गच्छति)

अयं संग्रामः आयासकारी संजातः। शांतिरपि निस्सारा शून्यगृहा पलायनपरा च। त्वं मत्तः अपि भाग्यशीला।

स्त्रियाः प्रेम स्वर्गस्य चक्षुरिव इह जगति सर्वत्र अनुधावति। पराजयमेव विजयीकरोति। सूर्याच्छादकमेघा इव दुरदृष्टमेव प्रकाशमयं करोति।

(देवदत्तः प्रविशति)

देवदत्तः— मां अनुधावतः मां रक्षय।

नृपः— के त्वं अनुधावंति ?

देवदत्तः— राजन्! तव रक्षापुरुषाः। एतां होरां यावत् अहं दृढतरराक्षायां बंधितः आसम्। साहित्यकलाविषयेषु मया प्रवचनं कृतम्। ते विनोदिताः। अहं तान् मोहयामि इति तैः चिंतितम्। ततः मया कालिदासस्य शृंगारगीतानि पठितानि। तेन एतौ ग्राम्यजनौ सुप्तौ। ततः निर्विण्णेन मया तान् विहाय इह आगतम्।

विक्रमः— बंधितेन कालिदासगीतेषु गीतासु निद्रां गतौ एतौ रक्षकौ तयोः नीरसत्वाय दंडनीयौ।

देवदत्तः— दंडनविचारं अनंतरं कुर्मः। प्रथमं तावत् अयं आयासकारी संग्रामः परिहरणीयः। गृहं गंतव्यं च। एतावत्कालपर्यंतं मया चिंतितं आसीत् यत् येषां विपुला संपत् ये च कोमलतया अभिवर्धिताः ते एव प्रेम्णः विरहदुःखं अनुभवंति इति। परंतु यदा अहं गृहं विहाय आगतः तदा प्रभृति मादृशः दरिद्रब्राह्मणः अपि प्रेमव्याकोपफलं अनुभवतीति अवगतम्।

विक्रमः— प्रेम मृत्युश्च पीडनाय जनान् न निपुणतया चिन्वंति। न तयोः कस्मिन्नपि पक्षपातः। मित्र! नूनं गृहं गच्छावः। किंतु अस्मात् प्रदेशात् गमनात् पूर्वं किंचित् अवश्यकर्तव्यं अस्ति। त्रिशुरमंडलाधिपतेः सकाशात् कुमारसेनस्य निगूहनस्थानं अवेहि।

अहं न तस्य शत्रुः इति निवेद्यताम्। किंच तेन साकं अन्या काचन अस्ति, यदि त्वं तां पश्यसि—

देवदत्तः— अहं तां जानामि। सा सर्वदा अस्माकं मनसि वर्तते। किंतु न सा अस्माकं वचनविषया। या उदात्ता तस्याः अधिकमेव दुःखं भवति।

विक्रमः— मित्र! वसंतमारुतस्य प्रथमप्रसर इव त्वं आगतः। इतः-परं गतकालीनमधुरस्मृतिभिः सह पुष्पाणि विकसेयुः।

(चन्द्रसेनः प्रविशति)

विक्रमः— अहं शुभवार्तां ते निवेदयामि। कुमारसेनाय क्षमा दत्ता।

चन्द्रसेनः— त्वया क्षमा दत्ता स्यात् किंतु मम आज्ञानुसारेण। स्वराष्ट्रशासननिर्णयः तेन अनुपालनीयः। मया दत्तः दंडः भोक्तव्यः।

विक्रमः— कीदृशः दंडः ?

चन्द्रसेनः— सः सिंहासनात् निष्कासितः स्यात्।

विक्रमः— असंभावितं इदम्। तस्य सिंहासनं मया पुनर्दीयते।

चन्द्रसेनः— काश्मीरसिंहासनविषये तव कः अधिकारः।

विक्रमः— विजयिनः अधिकारः। इदं सिंहासनं इदानीं मदधीनम्। अहं तस्मै दास्यामि।

चन्द्रसेनः— त्वया दीयेत। बाल्यात् प्रभृति अहं तस्य मनोवृत्तिं जानामि। सगर्वः सः तस्य पितुः सिंहासनं त्वत्तः दानं इति नांगीकुर्यात्। तव वैरप्रतीकारं सः सहेत नतु औदार्यम्।

संदेशहरः— कुमारसेनः शरणं आगंतुं संवृते वाहने आगच्छतीति वार्ता आगता।

चन्द्रसेनः— न विश्वसनीया इयं वार्ता। सिंहः शृांखलां याचितुं न आगमिष्यति। किं प्राणाः एवं पाल्याः!

विक्रमः— किमर्थं सः संवृते वाहने आगमिष्यति!

चन्द्रसेनः— कथं सः आत्मानं दर्शयति। रथ्यायां समाविष्टानां जनानां दृष्टिक्षिः बाणैः इव सः छिद्रीक्रियेत।
राजन्! आगते तस्मिन् दीपाः शाम्यंताम्। अंधकारे एव तं प्रवेशय। दीपानां अवज्ञा तस्य मास्तु।

(देवदत्तः प्रविशति)

देवदत्तः— नृपः कुमारसेनः त्वां द्रष्टुं स्वयमेव आगच्छतीति श्रुतम्।

विक्रमः— होमैः तस्य स्वागतं आशंसे। त्वं पुरोहितः भव। विवाह-सन्नाहार्थं सैनिकाः आयोजनीयाः इति सेनाधिपतिं ब्रूहि।

(वृद्धब्राह्मणाः प्रविशंति)

सर्वे— राजन् विजयी भव!

प्रथमः वृद्धब्राह्मणः— अस्माकं नृपः सिंहासनारोपणार्थं भवता आहूतः इति अस्माभिः श्रुतम्। अतः त्वां आशीर्वर्दितुं वयं आगताः।

(शंकरः प्रविशति)

काश्मीरदेशाय भवता प्रदत्तस्य आनंदस्य कृते।

(ते आशिषः वदंति। नृपः प्रणमति। ब्राह्मणाः निष्क्रमंति)

शंकरः— (चंद्रसेनं उद्दिश्य)
देव! कुमारसेनः शत्रुभ्यः शरणंगंतुं आगमिष्यतीति किमिदं यथार्थम्?

चन्द्रसेनः— सत्यमेतत्।

शंकरः— सहस्रमिथ्यावचनादपि दुष्करं इदम्। राजन्! अहं तव वृद्धः भृत्यः। मया विपुलं दुःखं अनुभूतं किंतु न कदापि अभियोजितम्। परंतु बंधनपंजरं प्रवेष्टुं त्वं काश्मीररथ्यातः आगमिष्यसीति कथं इदं सोढुं शक्नोमि। कुतः ते भृत्यः पूर्वमेव न मृतः!

(सैनिकः प्रविशति)

सैनिकः— वाहनं द्वारि तिष्ठति।

नृपः— किं वेणु मृदंगादिवाद्यानि न संति! मधुरं वाद्यघोषः क्रियताम्।

(द्वारसमीपं आगत्य)

मम क्षत्रियमित्र! पूर्णहृदयेन ते स्वागतं व्याहरामि।

(सुमित्रा आच्छादितं भांडं आदाय प्रविशति।)

विक्रमः— मम राज्ञि सुमित्रे!

सुमित्रा— नृप विक्रम! दिवारात्रं त्वया सः पर्वतेषु काननेषु च उच्छेदनं कुर्वता अन्वेषितः। तव प्रजानां तव च गौरवे औदासीन्यं कृतम्।

त्वया बहु अपेक्षितं तस्य शिरोमंडलं मम हस्तेन अद्य तेन प्रेषितम्। अस्य शिरोमंडलस्य उपरि तस्य मुकुटापेक्षया अधिकतया मृत्युः उपविष्टः।

विक्रमः— हंत मम राज्ञि!

सुमित्रा— इदानीं न अहं तव महिषी। यतः मृत्युना अनुकंपया अहं आत्मसात् कृतः।

(अधः पतति मरिष्यति च)

शंकरः— राजन्! प्रभो! वत्स! साधु त्वया अनुष्ठितम्। सार्वकालिकं नित्यं सिंहासनं त्वया आरूढम्। इदं ते विजयवैभवं द्रष्टुं भगवता मम एतावत् आयुः प्रदत्तम्। अद्य तु मे दिवसाः समाप्ताः। तव भृत्यः त्वां अनुसरति। (मरिष्यति)

(वधूवेषेण इला प्रविशति)

इला— राजन्! मया विवाहगीतं श्रूयते। कुत्र मे प्रियतमः? अहं सन्नद्धा।

समाप्तमिदं रूपकम्।

इति रवीन्द्रनाथठाकुरेण वंगभाषायां विरचितस्य
'नृपः महिषी च' नाम रुपकस्य
पांडुरंगि तम्मण्णाचार्यसुत कृष्णाचार्यकृतः
संस्कृतानुवादः समाप्तः।

श्री रवीन्द्रनाथठाकुरविरचितम्

# कर्णः कुन्ती च

नाम रूपकम्

# कर्णः कुंती च

कर्णः— अहं सूतस्य अधिरथस्य पुत्रः कर्णः गंगायाः पवित्रे तीरे अस्तं यांतं सूर्यं अर्चयितुं उपविष्टः। कथय मे का त्वं इति।

कुन्ती— त्वया अर्च्यमाने न सूर्येण सह तव प्रथमपरिचयं कृतवती स्त्रीः अहम्।

कर्णः— तव आशयं न जानामि। किंतु प्रभातसूर्यकिरणचुंबनेन पर्वतशिखगत हिमराशिरिव तव नेत्रसंपर्केण मम हृदयं द्रवीभवति। तव खरेण मयि गूढं दुःखं आविर्भवति यस्य कारणं मम स्मृतिपथात् सुदूरं निहितं स्यात्। महिले! कथय केन रहस्येन मम जन्म त्वया संबद्धं इति।

कुन्ती— पुत्र! धीरः भव। यदा दिनप्रकाशसूक्ष्मेक्षिकया अंधकारस्य पिधानं अपावृतं स्यात् तदा कथयामि। इदानीं मां कुन्तीं विजानीहि।

कर्णः— अर्जुनस्य माता कुन्ती!

कुन्ती— अथ किम्? तव विरोधिनः अर्जुनस्य माता। किंतु एतवता न मां द्विष। तस्मिन् दिने हस्तिनापुरे शस्त्रकौशलपरीक्षास्पर्धावसरे न कस्यापि विदितः त्वं धैर्येण स्पर्धाभूमिं आगतः इति इदं दृढं अहं स्मरामि। रात्रिनक्षत्रराशिं भित्वा प्रसरन् अरुणोदयकिरण इव

त्वं आगतः।

का सा शोकाकुला महिला यस्याः बाष्पाकुलैः नेत्रैः स्थिरं अनलंकृतं तव शरीरं स्पृशद्भ्यः आशिषः दत्ताः। स्पर्धाक्षेत्रपार्श्वे कुत्र सा उपविष्टा। अर्जुनस्य माता खलु सा।

ततः शस्त्रविद्यागुरुणा तेन ब्राह्मणेन पुरतः आगत्य उक्तं 'अकुलीनेन यूना अर्जुनेन सहशस्त्रस्पर्धां कर्तुं न अनुमोद्यते' इति। कुंठितविद्युच्छटास्फुरत्संध्याकालीनमेघ इव त्वं तूष्णीं स्थितः।

किंतु का सा महिला यस्याः हृदयं तव अवज्ञया क्रोधेन च मौनमेव ज्वलितम्। अर्जुनस्य माता खलु सा।

तव पराक्रमं अभिज्ञाय त्वां अंगराज्ये अभिषिच्य कौरवाणां पुरस्कर्तारं संपादितवान् दुर्योधनः प्रशंसनीयः। एतं शुभोदर्कं दृष्ट्वा विकसितहृदयः अधिरथः जनसंकुलं भित्त्वा पुरतः आगतः। त्वं सहसा तं उपगच्छन् तस्य पादयोः तव किरीटं अर्पितवान्। पांडवैः तत्सुहृद्भिश्च अपहसितम्। किंतु पांडवगृहस्य एकस्याः महिलायाः हृदयं तव विनयं वीरोचितगर्वनम्रं दृष्ट्वा हर्षेण प्रकाशितम्। अर्जुनस्य मातुः हृदयं इदम्।

कर्णः— अयि राजमातः! किमर्थं इह आगता असि?

कुन्ती— याचितुं अहं आगता।

कर्णः— आज्ञापय माम्। क्षत्रियस्य पुरुषकारस्य च यद्यत् उचितं तत् सर्वं तव पादयोः अर्पयामि।

कुन्ती— अहं त्वां नेतुं आगता।

कर्णः— कुत्र ?

कुन्ती— तव प्रेम्णः तृष्णावते मम हृदयाय।

कर्णः— पराक्रमिणां पंच राजपुत्राणां भाग्यवति मातः! अकुलीनस्य केवलं मंडलाधिपतेः मम तव हृदये कुत्र स्थानम् ?

कुन्ती— मम अनंतरपुत्रेभ्यः पूर्वमेव तव मे हृदि स्थानम्।

कर्णः— कः मे अधिकारः इमं स्थानं प्राप्तुम् ?

कुन्ती— तव देवतया सूर्येण एव मातुः प्रेम्णः तव अधिकारः कल्पितः।

कर्णः— संध्यामांद्यं पृथिवीं आवृणोति जलं मौनं आश्रयते। तव स्वरेण गूढे चैतन्ये निमग्नां बाल्यावस्थां नीतः अस्मि। अयं स्वप्नो वा भवतु विस्मृतस्य सत्यस्य अंशतः स्मरणं वा भवतु मम अंतिकं आगच्छ मम भाले तव दक्षिणहस्तं निधेहि। अहं मम मात्रा परित्यक्तः इति किंवदंती श्रूयते। अनेकासु रात्रिषु मम संमुग्धनिद्रावस्थायां सा आगता। किंतु 'तव जवनिकां अपावृणु। तव मुखं दर्शय' इति मयि वदति सा निस्सरति। किं एतादृशः एव स्वप्नः मयि जागृति एव अद्य आगतः।

पश्य! नद्याः अपरे तीरे तव पुत्राणां वस्त्रपटलगृहाणां दीपाः दूरतः प्रकाशंते। अस्मिन् तीरे कौरवाणां वस्त्रपटलगृहशिरवराणि सागरस्य स्तब्धतरंगाः इव दृश्यन्ते।

श्वः प्रवर्तमान संग्रामस्य पूर्वदिने अद्य यत्र भूमौ युद्धः प्रवर्तयितव्यः तत्रैव किमर्थं मम विरोधिनः अर्जुनस्य मातुः स्वरेण मया विस्मृतः मम मातृभावः ज्ञापनीयः? किमर्थं तस्याः जिह्वायां मम नाम एतावत् माधुर्यं आप्नुयात् येन मम हृदयं अर्जुनं पांडवान् प्रति च आकृष्टं स्यात्?

कुन्ती— पुत्र! मा विलंवस्व। मया सह आगच्छ।

कर्णः— अथ किम्। विना प्रश्नान् विना संदेहं अहं आगमिष्यामि। मम आत्मा आह्वानं अनुमोदते। विजयाय संरंभः यशसः आशा द्वेषावेशः एते सर्वे स्वप्नदृष्टविषयाः प्रभाते इव मिथ्याभूताः। कथय कुत्र मां नयसि इति।

कुन्ती— नद्याः अपरं तीरं नयामि यत्र भयजनकवालुकाप्रदेशेषु दीपाः प्रकाशंते।

कर्णः— किं तत्र मे मातरं प्राप्तुं गच्छामि?

कुन्ती— एवं मम पुत्र।

कर्णः— तर्हि किमर्थं अहं परित्यक्तः आसम्? मम पूर्वजानां भूमेः उन्मीलय किं मां गृहशून्यं विधाय अवज्ञा प्रवाहे अक्षिपः? किमर्थं मम अर्जुनस्य च सहजभ्रातृभावं उत्पाटच्य भीकरद्वेषपर्यवसायि वैरं उत्पादितम्?

त्वं तूष्णीं स्थिता असि। तव अवज्ञालज्जा विशालं अंधकारं प्रविश्य

मे अंगानि कंपयति। न मे प्रश्नान् उत्तरय। किमर्थं अहं मातृप्रेम्णा वंचितः इति माविशदय। केवलं इदं तावत् कथय यत् 'त्वयैव विनाशित् स्वर्गस्य विनाशावशेषान् द्रष्टुं किमर्थं अद्य अहं आकार्ये' इति।

कुंती— तव अवज्ञापेक्षया अधिकेन शापेन अहं शप्ता। यद्यपि अहं पंचपुत्रैः समावृता। तथापि मम हृदयं अपहृतसर्वपुत्रा इव व्यथते। परित्यक्ते न मम प्रथमपुत्रेण या अवज्ञा अनुभूता तया मम सर्वं सुखं अपहृतम्। यस्मिन् दुर्दिने मया मातृभावः दूषितः तस्मिन् दिने न त्वं एकमपि वचनं वक्तुं असमर्थः आसीः। अद्य तु अपराद्धा ते त्वया उदारवचनं अपेक्षते तव क्षमागुणः तस्याः हृदयं दहतु पापं च भस्मीकरोतु।

कर्णः— मातः! मम अश्रूणि मानय।

कुन्ती— त्वां पुनः मम बाहुपाशेन प्राप्तुं न अहं आगता। किंतु तव अधिकारं प्रतिष्ठापयितुं आगता। एहि राजपुत्र इव भ्रातृषु ते अधिकारं प्राप्नुहि।

कर्णः— अहं सूतपुत्र इत्येव अधिकं मन्ये। इतोपि अधिकं वंशगौरवं न अपेक्षे।

कुन्ती— तत् तथैव अस्तु। राज्यं तु प्राप्नुहि यत्र ते अस्ति अधिकारः।

कर्णः— किम् इदं युक्तं यत् 'मातृप्रेम्णा मां वंचितवत्या त्वया अहं इदानीं राज्येन लोभनीयः' इति। त्वया मूले एव निकृंततिः

भ्रातृभावः इदानीं विनष्टः। न कदापि प्ररोहेत्। सूतगृहे विद्यमानां मम मातरं विहाय यदि अहं इदानीं राजमात्रं मातरं वदामि तर्हि कृपणः स्याम्।

कुन्ती— पुत्र गरीयान् असि। देवदंडः सूक्ष्मबीजरूपेण आरब्धः महान् भवति। मात्रा परित्यक्तः शिशुः अंधकाराव-तनैक घटना द्वारा स्वभ्रातृणामेव शत्रुः भवति।

कर्णः— मातः! भीता मा भव। पांडवाः एव विजयीभवेयुः इति अहं जानामि। अयं च विजयः शान्तः स्थिरश्च स्यात्। तयापि मे हृदयं साहसं अनपेक्षितपरिणामं च आशास्ते। येषां पराजयः निश्चितः एव तान् त्यक्तुं मा मां उपदिश। पांडवाः विजयिनः भवंतु। अहं तु निराशग्रस्तैः सर्वपरित्यक्तैः सहैव तिष्ठामि।

यस्यां रात्रौ अहं जातः तस्यां अहं अनामधेयः नग्नः एव परित्यक्तः। इदानीमपि निघृणा सती मां प्रशांततया पराजयं मृत्युं च प्राप्तुं परित्यज।

समाप्तमिदं रूपकम्।

इति रवीन्द्रनाथठाकुरेण वंगभाषायां विरचितस्य
'कर्णः कुंती च' नाम रूपकस्य
पांडुरंगि तम्मण्णाचार्यसुत कृष्णाचार्यकृतः
संस्कृतानुवादः समाप्तः।